जीवेति प्रब्रुवन्प्रोक्तः कृत्यं कृत्यविचक्षणः ।
करोति निर्विकल्पं यः स भवेद्राजवल्लभः ॥ ५३ ॥
[2]प्रभुप्रसादजं वित्तं सुपात्रे यो नियोजयेत् ।
वस्त्राद्यं विद्धात्यङ्गे स भवेद्राजवल्लभः ॥ ५४ ॥
[3]अन्तःपुरचरैः सार्धं यो मन्त्रं न समाचरेत् ।
न कलत्रैर्नरेन्द्रस्य स भवेद्राजवल्लभः ॥ ५५ ॥
[4]संमतोहं प्रभोर्नित्यमिति मत्वा व्यतिक्रमेत् ।
कृच्छ्रेष्वपि न मर्यादां स भवेद्राजवल्लभः ॥ ५६ ॥
[5]द्वेषिद्वेषपरो नित्यमिष्टानामिष्टकर्मकृत् ।
यो नरो नरनाथस्य स भवेद्राजवल्लभः ॥ ५७ ॥

---

१ He, who, saying "live," is asked to do anything (कृत्यं), and who is well-versed in his duties and makes the king free from doubt or uncertainty, will be the favourite of the king. कृत्यविचक्षणः-विचक्षण added to substantives, means, well-versed or skilled in that which is denoted by the word to which it is affixed. निर्विकल्प—निर्गतः विकल्पः यस्मात्. ब. २ He who spends on a fitting object the money derived from the favour of a king and puts on his person the clothing and other things (obtained from the king,) will be the favourite of a king. प्रभुप्रसादात् जातं. प. त. सुपात्रे = शोभने पात्रे. क. वस्त्राद्यं = वस्त्र आद्यं यस्य तत् ब. विदधाति--lit. does on, puts on, wears. ३ He who does not hold counsel with those who move in the female apartment and also with the wives of the king, will be the favourite of a king. अन्तःपुरे चरंतीति = अन्तःपुरचराः. उप. ४ He who never trangresses the bounds of propriety thinking he is favoured by the king, even when reduced to difficulties, will be the king's favourite. संमत P. P. of मन् 4 A. Here यः is to be understood as the subject of व्यतिक्रमेत्. ५ That man who is on enemical terms with the enemies, and accomplishes the desires of the friends, of a king, will be the king's favourite. द्वेषिषु द्वेषपर —द्वेषपरः द्वेषः परं यस्य. ब. इष्टं कर्म करोतीति = इष्टकर्मकृत्. उप.

[1] द्यूतं यो यमदूताभं हालां हालाहलोपमाम् ।
पश्येद्दारान्वृथाकारान्स भवेद्राजवल्लभः ॥ ५८ ॥

[2] युद्धकालेऽग्रगो यः स्यात्सदा पृष्ठानुगः पुरे ।
प्रभोर्द्वाराश्रितो हर्म्ये स भवेद्राजवल्लभः ॥ ५९ ॥

करटक आह । अथ भवांस्तत्र गत्वा किं तावद्[3]वक्ष्यति । तत्तावदु[4]च्यताम । दमनक आह ।

[5] उत्तरादुत्तरं वाक्यं वदतां संप्रजायते ।
सुवृष्टिगुणसंपन्नाद्बीजाद्बीजमिवापरम् ॥ ६० ॥

[6] अपायसंदर्शनजां विपत्तिमुपायसंदर्शनजां च सिद्धिम ।
मेधाविनो नीतिगुणप्रयुक्तां पुरः स्फुरन्तीमिव दर्शयन्ति ॥ ६१ ॥

[7] एकेषां वाचि शुकवदन्येषां हृदि मूकवत ।
हृदि वाचि तथान्येषां वल्गु वल्गन्ति सूक्तयः ॥ ६२ ॥

---

१ He, who considers gambling as the messenger of death, wine as deadly posion and the king's wife as a phantom (of a vain form), will be the favourite of a king यमदूताभ=यमदूतस्येवाभा यस्य. तं. ब. हालाहलोपमां similarly वृथाकारान=वृथा आकारा येषां तान्. ब. २ He who walks in front at the time of battle and remains always behind when in the town and lives at the lord's door in the palace, will be the king's favourite. ३ तावत् in the first place. ४ Imper. 3rd P. Sing. of the Pass. of वच 2 P. ५ When people are conversing (वदतां) one reply arises from another, as one grain of seed is produced from another obtained by the abundance of good rain. सुवृष्टिरेव गुणः = सुवृष्टिगुणः तस्मात संपन्नात बीजात. ६ Talented persons show calamity arising from the use of apparently futile means and success arising from the employment of proper remedies and endowed with the quality of good feeling to be evident or clear before one's eyes. अपाय bad remedies, inadequate means. पुरःस्फुरन्ती as if shining vividly before one. ७ Good words or sayings prove effective in the speech of some as those of parrots, in the hearts of others as those of mute persons, and both in the heart and speech of some others. वल्गु वल्गन्ति dance beautifully, prove successful.

न चाहमप्रासकालं वक्ष्ये । आकर्णितं मया नीतिसारं पितुः पूर्वमुत्सङ्गं हि निषेवता ।

अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन् ।
लभते बुध्यवज्ञानमपमानं च पुष्कलम् ॥ ६३ ॥

करटक आह ।
दुराराध्या हि राजानः पर्वता इव सर्वदा ।
व्यालाकीर्णाः सुविषमाः कठिना दुःखसेविताः ॥ ६४ ॥

तथा च । भोगिनः कञ्चुकाविष्टाः कुटिलाः क्रूरचेष्टिताः ।
सुदुष्टा मन्त्रसाध्याश्च राजानः पन्नगा इव ॥ ६५ ॥
दुरारोहं पदं राज्ञां सर्वलोकनमस्कृतम् ।
स्वल्पेनाप्यपकारेण ब्राह्मण्यमिव दुष्यति ॥ ६६ ॥
दुराराध्याः श्रियो राज्ञां दुरापा दुष्परिग्रहाः ।

१ Anything for which there is no occasion or fitting opportunity. न प्राप्त कालः यस्य त. Here understand something like वचनं. २ Heard or listened to P P of कर्ण 10 U. with आ. ३ The essence of politics. ४ While I was setting formerly on the lap of my father. ५ Even Brihaspati saying anything for which no occasion exists, is blamed as wanting in sense and meets with a deal of disrespect. बुध्यवज्ञानं = बुद्धेरवज्ञानं ष. त. Another reading for पुष्कल is शाश्वतम् perpetual. ६ Kings are always hard to please, surrounded by rogues ( व्याल ), hard to understand, hard hearted and served with difficulty, like mountains, which are hard to ascend, full of ferocious beasts, very rugged, hard and approached with pain व्यालाकीर्णा and दुःखसेविता are त. त. compounds ७ Kings are given to enjoyments; covered with armours, crooked in mind, of wicked actions, very cruel and can be gained over by counsel, and so they are like serpents, who have hoods, who are covered with skin, crooked, wicked in deeds, vindictive and tamed by charms or incantations. क्रूरचेष्टिताः. ब. क्रूराणि चेष्टितानि येषां ते. ८ The dignity of king which is difficult to attain and to which all bow, is defiled or sullied even by a slight fault like the purity of a Brâhmana. ९ The glory of kings is hard to preserve, difficult to obtain and hard to grasp; but when once obtained it remains with one for a long time as do waters in a reservoir. दुरापाः = दुःखेन आप्तुं शक्याः.

तिष्ठन्त्यप इवाधारे चिरमात्मनि संस्थिताः ॥ ६७ ॥

दमनक आह । सत्यमेतत् । परं किंतु ।

[1]यस्य यस्य हि यो भावस्तस्य तस्य हितं नरः ।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥ ६८ ॥
[2]भर्तुश्चिन्तानुवर्तित्वं सुवृत्तं चानुजीविनाम ।
राक्षसाश्चापि गृह्यन्ते नित्यं छन्दानुवर्तिभिः ॥ ६९ ॥
[3]सरुषि नृपे स्तुतिवचनं तदभिमते प्रेम तद्द्विषि द्वेषः ।
तद्दानस्य च शंसा अमन्त्रतन्त्रं वशीकरणम् ॥ ७० ॥

करटक आह । यद्येवमभिमतं तर्हि शिवास्ते पन्थानः सन्तु । यथाभिलषितमनुष्ठीयतामिति । दमनकोऽपि करटकं प्रणम्य पिङ्गलकाभिमुखं प्रतस्थे । आगच्छन्तं दमनकमालोक्य पिङ्गलको द्वाःस्थमब्रवीत् । अपसार्यतां वेत्रलता । अयमस्माकं चिरन्तनो मन्त्रिपुत्रः

१ A man of talents having accommodated himself to the disposition of whomsoever he comes across, should soon win him over to his side. अनुप्रविश्य having entered into or adapted himself to. २ Following the inclinations of the master's mind is said to be the goodness of behaviour in servants; even demons are almost won or gained over by those who humour them चिन्तानुवर्तित्वं चिन्तां अनुवर्तित्वं. द्वि. त. ३ Making use of words of praise when the king is angry, showing affection for those who are in high favour with him, and hatred towards those who are his enemies and extolling his charities—this way of winning him over requires neither counsel or advice ( that is, he can be won over without charms or incantations ) सरुषि=रुषा सहिते, ब. अमन्त्रतन्त्रं न सन्ति मंत्राः तंत्राणि च यस्मिन्. ब. ४ If such be the case, I give my consent. ५ May you farewell on your journey! ( lit may your ways be happy ). This is said by way of farewell to those who are going on some business. ६ Let what you like be done, please yourself. ७ Towards, facing. This word is joined to nouns to form Gen. Tat. Compounds, here. पिंगलकस्याभिमुखम्. ८ A door-keeper. ९ Let—( it ) be removed. Imper. 3rd P. Sing. of the caus. of the Pass. of सृ with अप. १० The staff of a door-keeper. ११ Of a long standing. तन added to adverbs of time gives them the sense of definiteness, e. g., तदानींतन, कदानींतन.

समागतः[१]। तत्प्रवेशयतां द्वितीयमण्डलवर्ती[२] यथार्थवादी[३] च । अथोपदिष्टे[४] दमनकः पिङ्गलकं प्रणम्य प्राप्तानुज्ञ उपविष्टः[५]। स तु तस्य नखकुलिशालंकृतं[६] दक्षिणपाणिमुपरि[७] दत्त्वा[८] मानपुरःसरमुवाच[९]। अपि शिवं भवतः[१०]। कस्माच्चिराद्दृष्टोसि[११]। दमनक आह । न किंचिद्देवपादानामस्माभिः प्रयोजनम्[१२]। तथापि प्राप्तकालं वक्तव्यं । यत उत्तममध्यमाधमैः[१३] सर्वैरपि राज्ञां प्रयोजनम् । उक्तं च ।

[१४]दन्तस्य निष्कोषणकेन नित्यं
कर्णस्य कण्डूयनकेन वापि ।
तृणेन कार्यं भवतीश्वराणां
किमङ्ग वाग्घस्तवता नरेण ॥ ७१ ॥

तथा वयं देवपादानामन्वयागता[१५] भृत्या आपत्स्वपि पृष्ठगामिनो[१६] यद्यपि[१७] स्वमधिकारं[१८] न लभामहे तथापि देवपादानामेतद्युक्तं न भवति[१९]। उक्तं च।

---

१ See 9 in P. 28 for grammar. २ Occupying the rank next to the king, *viz.*, of सिंहानुयायिन्. ३ One who speaks what is right or true यथार्थं वदतीति. ४ When these instructions were issued. ५ Who had obtained permission ( अनुज्ञा to take his seat ). ६ Adorned with the thunderbolt-like nails नखकुलिश= नखान्येव कुलिशः नखकुलिश. तेन अलंकृत qualifying पाणि. ७ The right hand. ८ Having placed on him ( तस्य in the above line ). ९ Respectfully मान पुरः सरः यस्मिन्कर्मणि यथा तथा. १० Is your honour well ? अपि at the beginning asks a question. ११ How is it that you are seen after a long time ? How is it that I see you after a long time ? १२ Your Majesty's feet have no need whatever of us ; we are not at all wanted by you. १३ The best, middling and low. १४ The need of the rich is always served even by a blade of grass either for *scratching the ear or picking the teeth* ; how much more useful will a man be who is endowed with speech and hands ? किमङ्ग how much more or how much less-here of course it means how much more ? १५ Hereditary. १६ Going after, following. १७ Although ; yet. १८ Our own office ( *viz.* of ministers ) १९ It does not become or behove your Majesty to keep us out of office.

स्थानेष्वेव नियोक्तव्या भृत्याश्चाभरणानि च । ¹
न हि चूडामणिः पादे प्रभवामीति बध्यते ॥ ७२ ॥
यतः । अनभिज्ञो गुणानां यो न भृत्यैरनुगम्यते । ²
धनाढ्योपि कुलीनोपि क्रमायातोपि भूपतिः ॥ ७३ ॥
उक्तं च । ³ असमैः समीयमानः समैश्च परिहीयमाणसत्कारः ।
धुरि यो न युज्यमानस्त्रिभिरर्थपतिं त्यजति भृत्यः ॥ ७४ ॥
⁴ यच्चाविवेकितया राजा भृत्यानुत्तमपदयोग्यान्हीनाधमस्थाने नियोजयति न ते तत्रैव तिष्ठन्ति स भूपतेर्दोषो न तेषाम् । उक्तं च ।
⁵ कनकभूषणसंग्रहणोचितो
यदि मणिस्त्रपुणि प्रतिबध्यते ।
न स विरौति न चापि स शोभते
भवति योजयितुर्वचनीयता ॥ ७५ ॥
यच्च स्वाम्येवं वदति चिराद्दृश्यसे ⁶ तदपि श्रूयताम् ।

---

१ Servants and ornaments should be put in their proper places (and not elsewhere); for a crest-jewel is never tied to the foot by any one simply because he can afford to do so. Here the predicate agrees with the nearest subject—भृत्याः. २ A king who is not able to appreciate merits, though rich, nobly-born and hereditary, is not followed by the servants. धनाढ्यधनेन आढ्य. त त. ३ For three causes, viz., when he is placed on a footing of equaliy with unequals, when he is not paid proper respect among equals and when he is not placed at the head of all, a servant forsakes a king ( अर्थपति lord of riches ). समीयमान Pre. P. of समीय a verb formed from the noun सम. परिहीयमाणःसत्कारः यस्मात् from whom respect is withheld. ४ When a king through inconsiderateness appoints such servants as are fit for the best places to very low ones and when they do not remain there, it is the king's fault and not theirs. ५ If a jewel which is fit to be set in a gold ornament is set in a tin one, it neither sounds nor shines and the blame lies with him who sets it कनकभूषणे संग्रहणाय उचितः च. त. Another reading for प्रतिबध्यते is अभिधीयते meaning—is placed in or put in. वचनीयता abst. noun from वचनीय blameworthy. ६ Even that, viz. answer to that.

सव्यदक्षिणयोर्यत्र विशेषो नोपलभ्यते ।
कस्तत्र क्षणमप्यार्यो विद्यमानगतिर्वसेत् ॥ ७६ ॥
काचे मणिर्मणौ काचो येषां बुद्धिः प्रवर्तते ।
न तेषां संनिधौ भृत्यो नाममात्रोपि तिष्ठति ॥ ७७ ॥
यत्र स्वामी निर्विशेषं समं भृत्येषु वर्तते ।
तत्रोद्यमसमर्थानामुत्साहः परिहीयते ॥ ७८ ॥
न विना पार्थिवो भृत्यैर्न भृत्याः पार्थिवं विना ।
तेषां च व्यवहारोयं परस्परनिबन्धनः ॥ ७९ ॥
भृत्यैर्विना स्वयं राजा लोकानुग्रहकार्यपि ।
मयूखैरिव दीप्तांशुस्तेजस्व्यपि न शोभते ॥ ८० ॥
[6] अरैः संधार्यते नाभिर्नाभौ चाराः प्रतिष्ठिताः
स्वामिसेवकयोरेवं वृत्तिचक्रं प्रवर्तते ॥ ८१ ॥

---

१ What respectable person possessing a resource will dwell even a moment in the place where no distinction between right and left, that is, straightforward or otherwise, is observed. विद्यमानगति -विद्यमाना गतिर्यस्य. ब. ( he who has any other course open to him to take. ) २ A servant does not stay even in name ( much less in reality ) near those who think a piece of glass to be jewel and a jewel to be a glass-bead. नाममात्र -नाम मात्रा यस्य. ब. ३ The energy of those who are capable of industry fails them there where the master acts towards all his servants equally without any distinction. निर्विशेषम् indiscriminately नास्ति विशेषो यस्मिन्कर्मणि यथा तथा. अ० उद्यमसमर्थ-उद्यमाय समर्थः च. त. परिहीयते—Pas. of हा with परि. ४ The King cannot exist without servants and the servants without the king—this relation of theirs ( of master and servants ) depends on each other–or on mutuality. परस्परं निबध्नातीति. उप. 5 Even if a king bestow favours on the people, he does not shine without servants, as the sun ( दीप्तांशु ) though resplendent, does not shine without rays. दीप्तांशु· दीप्ताः अंशवः यस्य सः ब. ६ The navel of a wheel is supported by the spokes and the spokes are fixed in the navel; the wheel of the relation of master and servants is just like this.

१शिरसा विधृता नित्यं तथा स्नेहेन पालिताः ।
केशा अपि विरज्यन्ते निःस्नेहाः किं न सेवकाः ॥ ८२ ॥

२राजा तुष्टोऽपि भृत्यानामर्थमात्रं प्रयच्छति ।
ते तु संमानमात्रेण प्राणैरप्युपकुर्वते ॥ ८३ ॥

३एवं ज्ञात्वा नरेन्द्रेण भृत्याः कार्या विचक्षणाः ।
कुलीनाः शौर्यसंयुक्ताः शक्ता भक्ताः क्रमागताः ॥ ८४ ॥

४यस्मिन्कृत्यं समावेश्य निर्विशङ्केन चेतसा ।
आस्यते सेवकः स स्यात्कलत्रमिव चापरम् ॥ ८५ ॥

५यः कृत्वा सुकृतं राज्ञो दुष्कर हितमुत्तमम् ।
लज्जया वक्ति नो किंचित्तेन राजा सहायवान् ॥ ८६ ॥

६योऽनाहूतः समभ्येति द्वारि तिष्ठति सर्वदा ।
पृष्टः सत्यं मितं ब्रूते स भृत्योऽर्हो महीभुजाम् ॥ ८७ ॥

---

१ Even the hair which is always borne on the head and smeared with oil ( स्नेह ) turns gray, why should not then servants when no affection ( स्नेह ) is shown to them be disaffected ? Here the words स्नेह and विरज्यन्ते are used in a double sense : (1) oil (2) affection and (1) turing gray, (2) being disaffected. २ Even when pleased, a king gives his servants only wealth ; but as to them, they repay his obligations for any slight favour shown even with their lives ( at the cost of their lives). ३ Thus knowing a king should empoly such servants as are clever, nobly-born, endowed with bravery, able, devoted and hereditary. ४ That servant, by entrusting any business to whom one can sit with his mind at ease or free from fear, is like a second wife ( as useful as the wife herself ). समावेश्य abs. of the caus. of विश् with सम्. ५ A king is said to have a friend in that servant, who, having done a good action calculated to serve the best interest of the king, does not vaunt about it. ६ He is a deserving servant of kings, who goes near him uncalled, always stands at the door and when questioned speaks the truth in a few words. महीं. भुनक्ति सः महीभुज्. उप.

¹अनादिष्टोपि भूपस्य दृष्ट्वा हानिकरं च यः ।
यतते तस्य नाशाय स भृत्योर्हो महीभुजाम् ॥ ८८ ॥
²ताडितोपि दुरुक्तोपि दण्डितोपि महीभुजा ।
यो न चिन्तयते पापं स भृत्योर्हो महीभुजाम् ॥ ८९ ॥
³न क्षुधा पीड्यते यस्तु निद्रया न कदाचन ।
न च शीतातपाद्यैश्च स भृत्योर्हो महीभुजाम् ॥ ९० ॥
⁴श्रुत्वा सांग्रामिकीं वार्तां भविष्यां स्वामिनं प्रति ।
प्रसन्नास्यो भवेद्यस्तु स भृत्योर्हो महीभुजाम् ॥ ९१ ॥
⁵सीमा वृद्धिं समायाति शुक्लपक्ष इवोडुराट् ।
नियोगसंस्थिते यस्मिन्स भृत्योर्हो महीभुजाम ॥ ९२ ॥
⁶सीमा संकोचमायाति वह्नौ चर्म इवाहितम ।
स्थिते यस्मिन्स तु त्याज्यो भृत्यो राज्यं समीहता ॥ ९३ ॥

तथा शृगालोयमिति मन्यमानेन ममोपरि स्वामिना यदवज्ञा क्रियते तदप्ययुक्तम । उक्तं च यतः ।

---

१ He, who having seen anything causing damage to the king, strives to destroy it even without being told to do so, is a deserving servant of kings. हानिकरं stands for हानिकरं कार्यं or वस्तु. २ He who, though struck, scolded and find by the king, does not wish him any evil ( पापं ), is a deserving servant of kings. ३ He is a deserving servant of kings who never says that he is overtaken by hunger and sleep and also by cold, heat and others. शीतातपाद्यैः—शीतंच आतपश्च=शीतातपौ तौ आदौ येषां तैः ४ He, who having heard the rumour that a war is impending, looks cheerful, is a deserving servant of kings. प्रसन्नास्य a. ५ He, during whose tenure of office, the limits of the kingdom increase like the moon (the king of stars) in the bright half of a lunar month, is a deserving servant of kings. ६ He, during whose term of office, the limits of the kingdom become contracted like leather put in fire, should be shunned by him who wishes for a kingdom: समीहता. Instr. of समीहत् Pre. P. of समीह् usually Atmanepadi only. • If your Majesty shows me disrespect.

[1]स्वामिनि गुणान्तरज्ञे गुणवति भृत्येऽनुवर्तिनि कलत्रे।
मित्रे चानुपचर्ये निवेद्य दुःखं सुखी भवति॥१०१॥

भो दमनक शृणोषि शब्दं दूरान्महान्तम्। सोऽब्रवीत्। स्वामिन् शृणोमि। तत्[2]किम्। पिङ्गलक आह। भद्र अहमस्माद्वनाद्गन्तुमिच्छामि। दमनक आह। कस्मात्। पिङ्गलक आह। यतोऽ[3]द्यास्मद्वने किम[4]प्यपूर्वं स[5]त्त्वं प्रविष्टं यस्यायं महाशब्दः श्रूयते। तस्य च शब्दानु[6]रूपेण पराक्रमेण भवितव्यमिति। दमनक आह। यत्स्वामी शब्द[7]मात्रादपि भयमुपगतस्तदप्ययुक्तम्। उक्तं च।

[8]अम्भसा भिद्यते सेतुस्तथा मन्त्रोऽप्यरक्षितः।
पैशुन्याद्भिद्यते स्नेहो वाचा भिद्येत कातरः॥१०२॥

तन्न युक्तं स्वामिनः पू[9]र्वोपार्जितं वनं त्यक्तुम्। यतो [10]भेरीवे[11]णुवी[12]णामृ[13]दङ्गप[14]टहश[15]ङ्खका[16]हलादिभेदेन शब्दा अनेकविधा भवन्ति तन्न के[17]वलाच्छब्दमात्रादपि भेतव्यम्। उक्तं च।

[18]अत्युत्कटे च रौद्रे च शत्रौ यस्य न हीयते।
धैर्यं प्राप्ते महीनाथे न स याति पराभवम्॥१०३॥

---

१ A man becomes happy after having confided the secret of his grief to a master who can disitinguish between merits, to a servant who is virtuous, to a wife who is obedient, and to a friend who is unselfish गुणान्तर-गुणयोः अंतर. अनुवर्तिन् lit. following, obeying. अनुपचर्य. not to be waited on or served. २ What then ? what of that ? ३ In the forest of which I am the lord. ४ Unheard of or unseen before, strange, extraordinary. ५ An animal. ६ Its prowess must be according to its voice, or it must correspond with the voice ; as the voice so the strength. ७ Has been terrified only by hearing the sound. ८ A brige or causeway is broken by water, so also a counsel when not kept secret, is divulged ; friendship is dissolved through back-biting or slander and a coward is cowed down simply by words ( पैशुन्य is an abstract noun from पिशुन slanderer. ) ९ Acquired by forefathers. १० A kettle-drum. ११ A flute. १२ A lute. १३ A double drum, a tabour. १४ A war-drum. १५ A conch, a drum. १६ काहला f. A large drum. १७ Mere. १८ He, whose courage does not fail him when a very furious and terrible king approaches as an enemy, never sustains a defeat.

१दर्शितभयेऽपि धातरि धैर्यध्वंसो भवेन्न धीराणाम्।
शोषितसरसि निदाघे नितरामेवोद्धतः सिन्धुः ॥ १०४ ॥

तथा च। २यस्य न विपदि विषादः संपदि हर्षो रणे न भीरुत्वम्।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥ १०५ ॥

तथा च। ३शक्तिवैकल्यनम्रस्य निःसारत्वाल्लघीयसः।
जन्मिनो मानहीनस्य तृणस्य च समा गतिः ॥ १०६ ॥

अपि च। ४अन्यप्रतापमासाद्य यो दृढत्वं न गच्छति।
जतुजाभरणस्येव रूपेणापि हि तस्य किम् ॥ १०७ ॥

तदेवं ज्ञात्वा स्वामिना ५धैर्यावष्टम्भः कार्यः। न शब्दमात्राद्भेतव्यम्। उक्तं च।

६पूर्वमेव मया ज्ञातं पूर्णमेतद्धि मेदसा।
अनुप्रविश्य विज्ञातं यावच्चर्म च दारु च ॥ १०८ ॥

पिङ्गलक आह। कथमेतत्। सोऽब्रवीत्।

---

१ The courage of the bold will never totter even if the creator threaten them; when the heat of summer has dried up lakes, the ocean rises very high (is greatly agitated.) दर्शितभये—दर्शितं भयं येन स; Cf शोषितसरसि. २ A mother rarely gives birth to a son, who feels no sorrow in adversity and delight in prosperity, who is not frightened in a battle and who is the frontal mark on the forehead of the three worlds, or who is the best of all men in the three worlds. भुवनत्रयतिलकं ष. त. ३ The condition of him (that being) who is humble through want of strength, who is insignificant through worthlessness, who is destitute of honour, is equal to that of grass. शक्तिवैकल्यात् नम्रस्य. पं. त. मानहीन-मानेन हीन तृ. त. ४ What, indeed, is the use of the beauty of him who, having come in contact with the prowess of another, does not become firm like that of an ornament stuffed with lac which melts away by heat? प्रताप (1) Prowess (2) Heat. ५ Courage should be resorted to; should take heart. ६ First I thought that it was filled with marrow, but entering it, I knew that it contained only leather and wood.

## ॥ कथा २ ॥

कश्चिच्छृगालः क्षुत्क्षामकण्ठ[1] इतस्ततः परिभ्रमन्वने सैन्यद्वय[2]सं-ग्रामभूमिमपश्यत् । तस्यां च दुन्दुभेः[3] पतितस्य वायुवशा[4]द्वल्लीशाखा-ग्रैर्[5]हन्यमानस्य[6] शब्दमशृणोत् । अथ क्षुभितहृदय[7]श्चिन्तयामास । अहो[8] विनष्टोऽस्मि । तद्याव[9]न्नास्य प्रोच्चारितशब्दस्य[10] दृष्टिगोचरे गच्छामि तावदन्यतो व्रजामि । अथवा[11] नैतद्युज्यते सहसैव पितृपैतामहं[12] वनं त्यक्तुम् । उक्तं च ।

> [13] भये वा यदि वा हर्षे संप्राप्ते यो विमर्शयेत् ।
> कृत्यं न कुरुते वेगान्न स संतापमाप्नुयात् ॥ १०९ ॥

तत्तावज्जानामि कस्यायं शब्दः । धैर्यमालम्ब्य[14] विमर्शयन्यावन्म-न्दं मन्दं[15] गच्छति तावद्दुन्दुभिमपश्यत् । स च तं परिज्ञाय[16] समीपं गत्वा स्वयमेव कौतुका[17]दताडयत् । भूयश्च[18] हर्षादचिन्तयत् । अहो चिरा-देतदस्माकं महद्भोजनमापतितम्[19] । तन्नूनं प्रभूतमांसमेदोसृग्भिः[20]

---

१ With the throat parched with hunger क्षुधा क्षाम कण्ठ यस्य स. २ Two armies सैन्ययो द्वयं ३ A large kettle-drum. ४ Through the force or power of wind. ५ By the ends of the branches of creepers ६ Being beaten or struck. हन्यमान Pre. P. of हन 2 P. Pas. ७ Agitated or confused at heart. क्षुभितं हृदयं यस्य. स. ८ Oh, I am undone, ruined. ९ So long as not, before. १० Go within the reach of the sound uttered loudly. ११ Or rather. The word is used to correct or modify a foregoing statement. १२ Acquired by forefathers, hereditary. पितृपितामहस्य: इदं adj. १३ He, who considers well when, either a cause of danger or delight arises, and does not do anything through rashness, will have no cause for repentance. संताप affliction, heat and hence, *remorse*. १४ Having taken heart or courage. १५ Slowly and slowly, gently. १६ Having ascertained. १७ Through curiosity. १८ Again. १९ Has approached or come near. २० With plentiful flesh, marrow and blood. प्रभूतानि मांसमेदोसृंजि. तैः. क.

परिपूर्णं भविष्यति। ततः परुषचर्मावगुण्ठितं तत्कथमपि विदार्यैकदेशे छिद्रं कृत्वा संहृष्टमना मध्ये प्रविष्टः। परं चर्मविदारणे दंष्ट्राभङ्गः समजनि। अथ निराशीभूतस्तद्दारुशेषमवलोक्य श्लोकमेनमपठत्पूर्वमेव मया ज्ञातमिति॥

ततो न शब्दमात्राद्भेतव्यम्। पिङ्गलक आह। भोः पश्यायं मम सर्वोऽपि परिग्रहो भयव्याकुलितचित्तः पलायितुमिच्छति। तत्कथमहं धैर्यावष्टम्भं करोमि। सोऽब्रवीत्। स्वामिन्नैतेषामेष दोषो यतः स्वामिसदृशा एव भवन्ति भृत्याः। उक्तं च।

[16]अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च।
पुरुषविशेषं प्राप्ता भवन्त्ययोग्याश्च योग्याश्च॥ ११०॥

तस्मात्पौरुषावष्टम्भं कृत्वा त्वं तावदत्रैव प्रतिपालय यावदहमेतच्छब्दस्वरूपं[19] ज्ञात्वागच्छामि। ततः पश्चाद्यथोचितं कार्यमिति। पिङ्गलक आह। किं तत्र भवान्गन्तुमुत्सहते। स आह। [22]किं स्वाम्यादेशात्सद्भृत्यस्य कृत्याकृत्यमस्ति। उक्तं च। पश्चात = afterwards

१ Completely filled २ Harsh, tough ३ Enveloped. P. P. of गुण्ठ् with अव ४ Having torn asunder or split ( Abs. of दृ with वि ) ५ Delighted at heart. ६ Of him who was tearing open the skin ७ Breaking or fracture of the jaws ८ Took place 3rd P. Sing. Aorist of जन् with सम् optional form for अजनिष्ट. ९ Disappointed. १० Having only wood remaining ( दारु शेषं यस्य सः ) after the skin was torn open ११ Verse १२ All, without any exception; for this use of अपि see S. G. S. C XXI. १३ Retinue. १४ Frightened out of their wits १५ Like the master. स्वामिना सदृशाः त. त. १६ A horse, weapon, any kind of lore, lute, speech, man and woman, become fit and unfit ( for anything ) according as they are possessed by particular persons. विशेष (*m*) from शिष् 7 P. with वि to distinguish, to particularize. १७ Manliness १८ Wait Imper. of पा caus. १९ Nature. २० As it may suit you. २१ Dare or make bold. २२ What is there that is fit or unfit to do for a good servant at the command of the master? that is, he must do what his master bids him do, whether it be fit or unfit.

स्वाम्यादेशात्सुभृत्यस्य न भीः संजायते क्वचित् ।
प्रविशेन्मुखमाहेयं दुस्तरं वा महार्णवम् ॥ १११ ॥

तथा च । स्वाम्यादिष्टस्तु यो भृत्यः समं विषममेव च ।
मन्यते न स संधार्यो भूभुजा भूतिमिच्छता ॥ ११२ ॥

पिङ्गलक आह । भद्र यद्येवं तद्गच्छ शिवास्ते पन्थानः सन्त्विति । दमनकोऽपि तं प्रणम्य संजीवकशब्दानुसारी प्रतस्थे । अथ दमनके गते भयव्याकुलमनाः पिङ्गलकश्चिन्तयामास । अहो न शोभनं कृतं मया यत्तस्य विश्वासं गत्वात्माभिप्रायो निवेदितः । कदाचिद्दमनकोऽयमुभयवेतनो भूत्वा ममोपरि दुष्टबुद्धिः स्याद्भ्रष्टाधिकारत्वात् । उक्तं च ।

ये भवन्ति महीपस्य संमानितविमानिताः ।
यतन्ते तस्य नाशाय कुलीना अपि सर्वदा ॥ ११३ ॥

तत्तावदस्य चिकीर्षितं वेत्तुमन्यत्स्थानान्तरं गत्वा प्रतिपालयामि । कदाचिद्दमनकस्तमादाय मां व्यापादयितुमिच्छति । उक्तं च ।

---

१ A good servant has no fear anywhere when ordered to do anything by his master; he will enter the mouth of a serpent or the impassable sea. आहेयं—अहेरिदं adj. from अहि. २ That servant, who thinks of the easiness or difficulty of doing a thing when ordered by his master, should not be entertained in service by a king who wishes for his own welfare. संधार्य Pot. P. Part. of the caus. of धृ 1 P. with सम्. ३ Following the sound of. शब्दं अनुसरतीति. उप. स. ४ I have not acted well or I have not done well that I have &c. ५ Having put (lit. gone to) confidence ६ Receiving wages or pay from both the parties (myself and my enemy संजीवक). उभयवेतन. ब. ७ Ill-disposed or evil-disposed. ८ By reason of his having been thrown out of office. ९ Those who are first honoured and then dishonoured by a king, always strive to ruin him even though they be nobly-born. संमानि...ता Is a कर्मधारय. आदौ संमानिताः पश्चाद्विमानिता —Cf. स्नातानुलिप्त. १० कर्तुमिच्छितं what he desires to do. P.P. of the desid. of कृ 8 U. to do, used here as a substantive. ११ Here स्थानांतर after अन्यत् is redundant, either अन्यत्स्थानं or स्थानांतरं would have been quite sufficient. स्थानांतरं. क. अन्यत्स्थानम्. क. १२ Having taken him, that is, having made friends with him.

¹न वध्यन्ते ह्यविश्वस्ता बलिभिर्दुर्बला अपि ।
विश्वस्तास्त्वेवं वध्यन्ते बलिनो दुर्बलैरपि ॥ ११४ ॥

²बृहस्पतिरपि प्राज्ञो न विश्वासं व्रजेद्रिपौ ।
विश्वासात्त्रिदशेन्द्रेण दितेर्गर्भो विदारितः ॥ ११५ ॥

एवं संप्रधार्य स्थानान्तरं गत्वा दमनकमवलोकयन्नेकाकी तस्थौ । ?
दमनकोपि संजीवकसकाशं गत्वा वृषभोयमिति परिज्ञाय हृष्टमना
व्यचिन्तयत । अहो शोभनमापतितम् । ⁴अनेनैतस्य संधिविग्रहद्वारेण
मम पिङ्गलको वश्यो भविष्यतीति । उक्तं च ।

⁶न कौलीन्यान्न सौहार्दान्नृपो वाक्ये प्रवर्तते ।
मन्त्रिणां यावदार्तं न व्यसनं शोक एव च ॥ ११६ ॥

⁷सदैवापद्गतो राजा भोग्यो भवति मन्त्रिणाम् ।
अत एव हि वाञ्छन्ति मन्त्रिणः सापदं नृपम् ॥ ११७ ॥

१ Even those who are weak, are not killed even by the strong when they ( the weak ) have not put confidence or faith in them ( the strong ); but even the strong when they have confided ( in the weak ) are killed even by the weak. विश्वस्त is here used in the active sense. The prefix दुस् in दुर्बल has a negative sense वध्यन्ते for हन्यन्ते is not classical. २ A wise man though possessed of great talent should not place confidence in an enemy, the lord of the gods (Indra) tore open the womb of Diti through confidence महामति -व. Diti, the wife of Kasyapa and the mother of the demons. ३ Proximity, nearness ४ A lucky thing has come to pass! ५ By this (viz. the fact that the object of the lion's fear is a bull) Pingalaka will come within my power by means of my uniting him (Sanjivaka) with the lion and then separating him from him. ६ A king does not act up to or follow the counsel of his ministers, either through nobility of birth or friendship, until a calamity or a source of grief befalls him ( king ). कौलीन्य abstract noun from कुलीन. ७ A king, who is always in anxiety or danger, becomes profitable to ministers; and it is for this reason that ministers always wish the king to be involved in difficulties.

यथा नेच्छति नीरोगः कदाचित्सुचिकित्सकम् ।
तथापद्रहितो राजा सचिवं नाभिवाञ्छति ॥ ११८ ॥[१]

एवं विचिन्तयन्पिङ्गलकाभिमुखः प्रतस्थे [२]। पिङ्गलकोऽपि तमायान्तमुत्प्रेक्ष्य स्वाकारं[३] गूहमानो यथा[४]पूर्वमवस्थितः । दमनकोऽपि पिङ्गलकसकाशं गत्वा प्रणम्योपविष्टः । पिङ्गलक आह । किं दृष्टं भवता तत्सत्त्वम् । दमनक आह । दृष्टं स्वामिप्रसादात् । पिङ्गलकोऽप्याह । [६]सत्यं दृष्टं भविष्यति । दमनक आह । [७]किं स्वामिपादानामग्रेऽसत्यं विज्ञाप्यते । उक्तं च ।

[८]अपि स्वल्पमसत्यं यः पुरो वदति भूभुजाम् ।
देवानां च विनश्येत स द्रुतं सुमहानपि ॥ ११९ ॥

तथा च ।

[९]सर्वदेवमयो राजा मनुना संप्रकीर्तितः ।
तस्मात्तमेव सेवेत न व्यलीकेन कर्हिचित् ॥ १२० ॥

[१०]सर्वदेवमयस्यापि विशेषो भूपतेरयम् ।
शुभाशुभफलं सद्यो नृपाद्देवाद्भवान्तरे ॥ १२१ ॥

---

१ As a person free from disease never wishes for a good physician, so a king free from difficulty never wishes to have minister. २ Towards Pingalaka. ३ Concealing his own form, that is, his appearance as a spy on the actions of Damanaka. ४ As before. ५ Through your Majesty's favour. ६ Can it be that you have actually seen it? ७ What! is a lie ever told before your Majesty? Can I ever give you a false information? ८ He, who, though great, tells even the least lie before kings and gods, will soon perish.—Here नश् with वि is used in the Atmanepada. ९ A king is declared to be full of all gods by Manu; no one, therefore, should ever serve him deceitfully; for तस्मात्तमेव सेवेत we have तस्मात्तं देववत्पश्येत meaning—he should, therefore, be looked upon as god. १० Though a king is full of all gods, this is the difference between him and the gods viz., the fruit of good and evil is obtained from a king at once or immediately, while that from gods in the next birth or existence. भवान्तर compare स्थानान्तर.

पिङ्गलक आह । सत्यं दृष्टं भविष्यति भवता । न दीनोपरि महान्तः कुप्यन्तीति न त्वं तेन निपातितः । यतः ।

तृणानि नोन्मूलयति प्रभञ्जनो
मृदूनि नीचैः प्रणतानि सर्वतः ।
स्वभाव एवोन्नतचेतसामयं or समुच्छ्रितानेव तरून्प्रबाधते ।
महान्महत्स्वेव करोति विक्रमम् ॥ १२२ ॥

अपि च । गल्लस्थलेषु मदवारिषु बद्धराग-
मत्तभ्रमद्भ्रमरपादतलाहतोपि ।
कोपं न गच्छति नितान्तबलोपि नाग-
स्तुल्ये बले तु बलवान्परिकोपमेति ॥ १२३ ॥

दमनक आह । अस्त्येवं महात्मा स वयं कृपणाः । तथापि स्वामी यदि कथयति ततो भृत्यत्वे नियोजयामि । पिङ्गलक आह सोच्छ्वासम् । किं भवाञ्शक्तोस्त्येवं कर्तुम् । दमनक आह । किमसाध्यं बुद्धेरस्ति । उक्तं च ।

---

१ दीनापरि is equivalent to दीनेभ्यः the dative plural of दीन which is the case which क्रुध् &c. govern. दीनानाम् उपरि With the poor. २ Attacked or assaulted. ३ A violent wind does not uproot grass which is soft (yielding) and entirely bends down (salutes) lowly, it is but the inborn disposition of the lofty minded; a great person displays his valour only against the great. उन्नत चेतसां व. ४ An elephant, though possessed of great strength, does not get angry, even when trodden by the feet of bees hovering about with intoxication produced by their attachment to the temples of elephants covered with the rutting juice; a powerful person gets angry with persons of equal strength. Another reading for गल्लस्थलेषु is गण्डस्थलेषु मदवारिषु. व. मदवारि विगलत्पृथु तेषु नितान्तबले व. ५ Thus, *i.e.*, as described by you. ६ Miserly, wretched. ७ Shall appoint him a servant, shall make him (your) servant. ८ With a sigh or fetching a sigh उच्छ्वासेन सहितं यथा तथा. ९ What is impracticable to talent? What can talent not accomplish?

[1]न तच्छस्त्रैर्न नागेन्द्रैर्न हयैर्न पदातिभिः ।
कार्यं संसिद्धिमभ्येति यथा बुद्ध्या प्रसाधितम् ॥ १२४ ॥

पिङ्गलक आह । यद्येवं तर्ह्यमात्यपदे [2]आरोपितस्त्वम् । [3]अद्यप्रभृति [4]प्रसादनिग्रहादिकं त्वयैव कार्यमिति [5]निश्चयः । अथ दमनकः सत्वरं गत्वा [6]साक्षेपं तमिदमाह । एह्येहि दुष्ट वृषभ । स्वामी पिङ्गलकस्त्वामा[7]कारयति । किं [8]निःशङ्को भूत्वा [9]मुहुर्मुहुर्[10]नर्दसि वृथेति । तच्छ्रुत्वा संजीवकोऽब्रवीत । भद्र कोयं पिङ्गलकः । दमनक आह । किं स्वामिनं पिङ्गलकमपि न जानासि । तत्क्षणं प्रतिपालय । [11]फलेन ज्ञास्यसि । नन्वयं सर्वमृगपरिवृतो वटतले स्वामी पिङ्गलकनामा सिंहस्तिष्ठति । तच्छ्रुत्वा [12]गतासुमात्मानं मन्यमानः संजीवकः परं विषादमगमत् । आह च । भद्र भवान्[13]साधुसमाचारो [14]वचनपटुश्च दृश्यते । तद्यदि मामवश्यं तत्र नयसि तद[15]भयप्रदानेनात्मीयस्वामि[16]सकाशात्प्रसादः कारयितव्यः । दमनक आह । भोः सत्यमभिहितं भवता । [17]नीतिरेषा । यतः ।

[18]लभ्यते भूमिपर्यन्तः समुद्रस्य गिरेरपि ।
न कथंचिन्महीपस्य चित्तान्तः केनचित्क्वचित् ॥ १२५ ॥

---

१ A business is not so well accomplished by means of weapons, elephants, horses and foot-soldiers as it is by means of talent. २ Placed, seated, P. P. of रुह् with आ caus. ३ From to-day, hence-forward. ४ Showing favours or awarding punishment &c. प्रसादश्च निग्रहश्च आदौ यस्य-तत् (कार्यम्). ५ This is the resolution I have come to. ६ Revilingly आक्षेपेण सहितं यथा तथा. अव्य. ७ Asks, demands. (caus. of कृ 8 U. with आ.) ८ Without fear. ९ Again and again, repeatedly. १० To bellow, to roar. ११ You will know by the result (who he is and what his power is). १२ Dead,-गता असवः यस्य तं. ब. १३ Of good conduct, well-behaved. साधुः समाचारः यस्य. ब. १४ Clever in speech. स. त. १५ By the gift of freedom from fear or by a promise of safety. १६ Favour should be caused to be shown (to me) at the hands of your lord. कारयितव्य Pot. Pass. Participle of कृ caus. १७ Policy, morality. १८ The extremity of the earth, sea, and even of the mountain can be reached, but that of a king's mind can never be reached by any body.

तत्त्वमत्रैव तिष्ठ यावदहं ते समये दृष्ट्वा ततः पश्चात्त्वामानयामीति । तथानुष्ठिते दमनकः पिङ्गलकसकाशं गत्वेदमाह । स्वामिन्न तत्प्राकृतं सत्त्वं भगवतो महेशस्य वाहनभूतो वृषभ इति । मया पृष्ट इदमूचे । श्रीमहेशेन परितुष्टेन कालिन्दीपरिसरे शष्पाग्राणि चरितुं समादिष्टः । किं बहुना ? मम प्रदत्तं क्रीडार्थं वनमिदम् । पिङ्गलक आह सभयम् । ज्ञातं मयाधुना न देवताप्रसादं विना शष्पभोजिनो व्यालाकीर्णे वन एवं निःशङ्का नदन्तो भ्रमन्ति । ततस्त्वया किमभिहितम् । दमनक आह । स्वामिन्नेतदभिहितं यदेतद्वनं चण्डिकावाहनभूतस्य पिङ्गलकस्य विषयीभूतम । तद्भवानभ्यागतः प्रियोऽतिथिः । तत्तस्य सकाशं गत्वा भ्रातृस्नेहेनैकत्र भक्षणपानविहरणक्रियाभिरेकस्थानाश्रयेण कालो नेयः । तेनापि सर्वमेतत्प्रतिपन्नमुक्तं च सहर्षं स्वामिनः सकाशादभयदक्षिणा दापयितव्येति । तदत्र स्वामी प्रमाणम । तच्छ्रुत्वा पिङ्गलक आह । साधु सुमते साधु

---

१ On an opportunity offering itself. २ It being so done. ३ Ordinary, common. ४ The god S'iva. ५ Become a vehicle. ६ Ground on the skirts of the Kâlindi or Yamunâ. ७ The ends of tender grass. ८ To graze, to eat. ९ What is the use of more? in short. १० To sport or for sporting. ११ Now I see. १२ Grass-eaters. शष्पं भुञ्जते इति शष्पभोजिनः. उप. १३ Abounding in wild or ferocious animals. १४ That &c. १५ Who has become a vehicle of the wife of S'iva-चण्डिका the name of Pârvati, who has the lion for her vehicle. १६ Become a kingdom. १७ Approached or arrived. १८ A guest. १९ With such friendship as exists between brothers. २० With actions such as eating, drinking and sporting. भक्षणपानविहरणानि एव क्रियाः. क. २१ By resorting to one place, by living together. २२ Admitted, acknowledged P. P. of पद् with प्रति. २३ The gift of the promise of safety; for construction, see 16 in p. 44. २४ Then in this case your majesty is an authority, your majesty should decide what to do. २५ Well done, oh person of good talent, well done.

मन्त्रिश्रोत्रिय साधु । [2]मम हृदयेन सह संमन्त्र्य भवतेदमभिहितम् तद्दत्ता मया तस्याभयदक्षिणा । परं सोपि मदभयदक्षिणां याच यित्वा [3]द्रुततरमानीयतामिति । अथ साधु चेदमुच्यते ।

[4]अन्तःसारैरकुटिलैरच्छिद्रैः सुपरीक्षितैः ।
मन्त्रिभिर्धार्यते राज्यं सुस्तम्भैरिव मन्दिरम् ॥ १२६ ॥

तथा च । मन्त्रिणां भिन्नसंधाने भिषजां सांनिपातिके ।
[5]कर्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः ॥१२७॥

दमनकोपि तं प्रणम्य संजीवकसकाशं प्रस्थितः सहर्षमचिन्तय-
[6]यदात्मप्रसादसंमुखो नः स्वामी [7]वचनैवशश्च संवृत्तस्तन्नास्ति [8]धन्य-
तरो मम । उक्तं च ।

[9]अमृतं शिशिरे वन्हिरमृतं प्रियदर्शनम ।
अमृतं राजसंमानममृतं क्षीरभोजनम ॥ १२८ ॥

---

१ A learned minister. २ You have said this, as if, in consultation with my mind, that is, you have said just what I would have said. ३ Here याचयित्वा the causal form is used for the primitive याचित्वा. This use is very frequent in the Panchatantras. ४ A kingdom is supported by ministers who are steady in mind, straightforward, without defects and well-tried, as a house is held by pillars which are solid, straight, without holes, and well-examined ( before they are fixed in the ground ). अन्तःसारैः अन्तः सारं येषां तैः. ब. धार्यते—caus. for primitive. ५ The wisdom of ministers is seen when peace is broken and the skill of physicians is tried when one is attacked by what is called सन्निपात ( the complication of the three humours of the body ) , what man is not wise when there is all quiet or peace, that is, when there is no occasion for the display of skill ? भिन्नसंधाने-भिन्ने संधाने. क. सांनिपातिक an adjective from संनिपात from पत् with सम. व्यज्यते from अञ्ज 7 P. with वि to manifest. ६ Ready to show favour to me. ७ Gone into the power of my advice, that is, ready to abide by my advice. ८ More happy or blessed. मम = मत् ablative. ९ Fire is nectar itself ( pleasant ) in the cold season, the sight of a beloved person is nectar, the honour paid by a king is nectar and food containing milk, is nectar. क्षीरभोजन—क्षीरयुक्तं भोजनं. संमान used here as a neuter noun.

अथ संजीवकसकाशमासाद्य सप्रश्रयमुवाच । भो मित्र प्रार्थितो-ऽसौ मया भवदर्थे स्वाम्यभयप्रदानम् । तन्निःशङ्कं गम्यतामिति । परं त्वया राजप्रसादमासाद्य मया सह समयधर्मेण वर्तितव्यम् । न गर्वमासाद्य स्वप्रभुतया विचरणीयम् । अहमपि तव संकेतेन सर्वां राज्यधुरममात्यपदवीमाश्रित्योद्धरिष्यामि । एवं कृते द्वयोरप्यावयो राज्यलक्ष्मीर्भोग्या भविष्यति । यतः ।

आखेटकस्य धर्मेण विभवाः स्युर्वशे नृणाम् ।
नृप्रजाः प्रेरयत्येको हन्त्यन्योऽत्र मृगानिव ॥ १२९ ॥

तथा च । यो न पूजयते गर्वादुत्तमाधममध्यमान् ।
नृपासन्नान्स मान्योऽपि भ्रश्यते दन्तिलो यथा ॥ १३० ॥

संजीवक आह । कथमेतत् । सोऽब्रवीत् ।

## ॥ कथा ३ ॥

अस्त्यत्र धरातले वर्धमानं नाम नगरम् । तत्र दन्तिलो नाम

---

१ Respectfully, courteously. २ For your sake, on your behalf. ३ You should act with me on terms of friendship or mutual agreement for keeping on friendly terms. ४ On your own authority or power. ५ To act or behave. ६ By agreement with you. ७ The yoke or responsibility of a kingdom or Government. It is the object of उद्धरिष्यामि. ८ Having attained to the dignity of a minister. ९ It being so done. १० Royal dignity or royalty. ११ Fit to be enjoyed, enjoyable १२ Riches will be obtained by men by following the duty of hunting or chase in which one man raises the game and another kills it: in the same way, one will direct the actions of the subjects and another will punish them ( if found to go astray ). नृप्रजा· human subjects. क. १३ Even a respectable person, who through pride does not honour the best, middling and low persons near the king, falls off from royal favour, as did Dantila in the following story. १४ On the surface of the earth. १५ Burdwan of the modern times.

नानाभाण्डपतिः सकलपुरनायकः प्रतिवसति स्म । तेन पुरकार्यं नृपकार्यं च कुर्वता तुष्टिं नीतास्तत्पुरवासिनो लोकाः नृपतिश्च । किं बहुना । न कोपि तादृक्चतुरो दृष्टो नापि श्रुतो वेति । अथवा सत्यमेतदुक्तम ।

नरपतिहितकर्ता द्वेष्यतां याति लोके
जनपदहितकर्ता त्यज्यते पार्थिवेन्द्रैः ।
इति महति विरोधे वर्तमाने समाने
नृपतिजनपदानां दुर्लभः कार्यकर्ता ॥ १३१ ॥

अथैवं गच्छति काले दन्तिलस्य कदाचिद्विवाहः संप्रवृत्तः । तत्र तेन सर्वे तत्पुरवासिनो राजसंनिधिलोकाश्च संमानपुरःसरमामन्त्र्य वस्त्रादिभिः सत्कृताः । ततो विवाहानन्तरं राजा सान्तःपुरः स्वगृहमानीयाभ्यर्चितः । अथ तस्य नृपतेर्गृहसंमार्जनकर्ता गोरम्भो नाम राजसेवको गृहायातोपि तेनानुचितस्थान उपविष्टो विज्ञाया-

---

१ Rich in the merchandize of various kinds. २ The leader of the whole town. ३ Duties towards the town or pertaining to the towns-people. ४ Were pleased or satisfied. ५ It is truly said. ६ He, who does the good of the king ( नरपति ), comes to be hated by the people, while he, who looks to the interest of the subjects, is abondoned by kings; thus there being great opposition equal ( on both sides ), one, who does the duties of the king and the subjects ( to the satisfaction of both) is, therefore, rare. पार्थिवेन्द्र lit. a king of kings. ७ Thus as time rolled on, in course of time. ८ Took place, happened. ९ तस्मिन् in it, *viz.*, the marriage. १० The people near or about the king. ११ Being invited. १२ Were treated with hospitality or respect. १३ After the marriage ceremony was over. विवाहादनंतरं. पं. त. १४ Accompanied with the inmates of the harem, together with his queens. १५ Worshipped or honoured. १६ He who did the menial work of cow-dunging &c. १७ Having known or found out that he sat in a place where he did not deserve to sit, *i. e.*, in a place high for his position.

अर्धचन्द्रं दत्त्वा निःसारितः । सोपि ततः प्रभृति निःश्वसन्नपमानान्न रात्रिमपि शेते । कथं मया तस्य भाण्डपते राजप्रसादहानिः कर्तव्येति चिन्तयन्नास्ते । किमनेन वृथा शरीरशोषेण । न किंचिन्मया तस्यापकर्तुं शक्यमिति । अथवा साध्विदमुच्यते ।

"यो ह्यपकर्तुमशक्तः कुप्यति किमसौ नरोत्र निर्लज्जः ।
उत्पतितोपि हि चणकः शक्तः किं भ्राष्ट्रकं भङ्क्तुम् ॥ १३२ ॥

अथ कदाचित्प्रत्यूषे योगनिद्रां गतस्य राज्ञः शय्यान्ते मार्जनं कुर्वन्निदमाह । अहो दन्तिलस्य महद्धृष्टत्वं यद्राजमहिषीमालिङ्गति । तच्छ्रुत्वा राजाससंभ्रममुत्थाय तमुवाच । भो गोरम्भ सत्यमेतद्यद्देवी दन्तिलेनालिङ्गितेति । गोरम्भः प्राह । देव रात्रिजागरेण द्यूतासक्तस्य मे बलान्निद्रा समायाता । तन्न वेद्मि किं मयाभिहितम । राजा सेर्ष्यं स्वगतम् । एष तावदस्मद्गृहेऽप्रतिहतगतिस्तथा दन्तिलोपि । तत्कदाचिदनेन देवी समालिङ्ग्यमाना दृष्टा भविष्यति । तेनेदमभिहितम् । उक्तं च ।

१ The expression अर्धचन्द्रं दा means to seize a person by the neck and turn him out. २ Breathing (revenge) through the indignity offered to him. ३ The forfeiture or loss of the king's favour. ४ By the drying up or withering of the bodily frame (through anxiety). ५ Why should that shameless person, who is unable to retaliate a wrong, get angry ? For, is a gram, though it flies up, able to break the frying pan ? (in which it is fried). ६ In the early morning. ७ While the king was in a state of half contemplation and half sleep. ८ Near the bed-stead or couch. ९ Boldness; audacity. १० The crowned Queen. ११ With great haste, hastily. संभ्रमेण सहितं यथा तथा. १२ On account of wakefulness at night. १३ Addicted to gambling. १४ Sleep came on me forcibly; sleep forced itself upon me. १५ With jealousy ईर्ष्यया सहितं यथा तथा. अत्र्य. १६ Aside, to himself. This is one of the stage directions in dramas when a person says anything "aside" or soliloquizes, this expression is used. १७ As to this man, viz. Gorambha. १८ Has uninterrupted access. अप्रतिहता गतिर्यस्य स. १९ Cf. 6 in P. 42.

¹यद्वाञ्छति दिवा मर्त्यो वीक्षते वा करोति वा ।
तत्स्वप्नेपि तदभ्यासाद्ब्रूते वाथ करोति वा ॥ १३३ ॥

तथा च । ²शुभं वा यदि वा पापं यन्नृणां हृदि संस्थितम् ।
सुगूढमपि तज्ज्ञेयं स्वप्नवाक्यात्तथा मदात् ॥ १३४ ॥

अथवा स्त्रीणां³ विषये कोत्र संदेहः⁴ ।
⁵जल्पन्ति सार्धमन्येन पश्यन्त्यन्यं सविभ्रमाः ।
हृद्गतं चिन्तयन्त्यन्यं प्रियः को नाम योषिताम् ॥ १३५ ॥
⁶एकेन स्मितपाटलाधररुचो जल्पन्त्यनल्पाक्षरं
वीक्षन्तेन्यमितः स्फुटत्कुमुदिनीफुल्लोल्लसल्लोचनाः ।
दूरोदारचरित्रचित्रविभवं ध्यायन्ति चान्यं धिया
केनेत्थं परमार्थतोर्थवदिव प्रेमास्ति वामभ्रुवाम् ॥ १३६ ॥

---

¹ That, which a man wishes for, sees or does during day time, he speaks of or does in a dream by reason of its being constantly in the mind. ² That which is uppermost in the minds of people whether good or evil, though well guarded, can be known by others by their raving about it in a dream and also through intoxication. ³ As regards women; with respect to women. ⁴ Doubt. ⁵ They (women) speak with one person and look amorously at another and think of a third who is the object of their hearts; who indeed is beloved by women? हृद्गतं-हृदि गतं. स. त. ⁶ They (women) with the lustre of their lower-lips rendered reddish by smiles, talk much with one person, look at quite a different one with eyes shining like full-blown lotuses, and think inwardly of a third whose conduct is far from being noble, but who possesses manifold riches; in this way for whom do women (वामभ्रुवः) entertain love in the real sense of the term? स्मित...च —स्मितेन पाटला अधररुक् यासां. ब. स्मितपाटल may also mean a *blown* पाटल *flower*. अनल्पाक्षरं-अनल्पान्यक्षराणि यस्मिन् यथा तथा. अव्य. इतः अन्यम् some one other than this one. स्फुट......नाः—स्फुटन्त्यः कमलिन्य इव फुल्लानि उल्लसन्ति च लोचनानि यासां ताः. ब. दूरो...वं-दूरं उदारचरित्रं यस्य सः दूरोदारचरित्रः, चित्राः विभवाः यस्य सः ब. परमार्थतः significant in reality. वामभ्रूः-वामे भ्रुवौ यस्याः सा. वामभ्रूः a woman with beautiful eyebrows.

तथा च । [1]नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥ १३७ ॥

[2]रहो नास्ति क्षणो नास्ति नास्ति प्रार्थयिता नरः ।
तेन नारद नारीणां सतीत्वमुपजायते ॥ १३८ ॥

[3]यो मोहान्मन्यते मूढो रक्तेयं मम कामिनी ।
स तस्या वशगो नित्यं भवेत्क्रीडाशकुन्तवत् ॥ १३९ ॥

[4]तासां वाक्यानि कृत्यानि स्वल्पानि सुगुरूण्यपि ।
करोति यः कृतैर्लोके लघुत्वं याति सर्वतः ॥ १४० ॥

[5]स्त्रियं च यः प्रार्थयते संनिकर्षं च गच्छति ।
ईषच्च कुरुते सेवां तमेवेच्छन्ति योषितः ॥ १४१ ॥

[6]अनर्थित्वान्मनुष्याणां भयात्परिजनस्य च ।
मर्यादायाममर्यादाः स्त्रियस्तिष्ठन्ति सर्वदा ॥ १४२ ॥

---

१ Fire is not satisfied with any quantity of fuel, the great ocean with any number of rivers falling into it, the god of death even with all creatures, and women with any number of men. Here the four Genetives are used for the instrumental. वामलोचना:—here वाम means beautiful—as in वामभ्रूः. २ Oh Nārada, there is chastity in women only when there is no lonely place, fitting opportunity and a man to make love to them ( and not otherwise ). ३ That foolish man who thinks or believes through ignorance that his wife is attached to him, will always be under her thumb like a bird kept for sport. ४ He, who does their ( women's ) biddings and business whether trifling or great, demeans himself entirely in the opinion of the public by those very actions. कृतैः = कृत्यैः. ५ Women wish only for that man, who sues a woman, goes near her and does even some trifling service for them. ६ Ill-behaved women ( lit. those who have trangressed the proper limits ) always keep within proper bounds only for want of suing on the part of men and the fear of their attendants. अनर्थित्वात्-न अर्थित्वं. न. त.

¹नासां कश्चिदगम्योऽस्ति नासां च वयसि स्थितिः ।
विरूपं रूपवन्तं वा पुमानित्येव भुञ्जते ॥ १४३ ॥

²रक्तोभिजायते भोग्यो नारीणां शाटको यथा ।
घृष्यते यो दशालम्बी नितम्बे विनिवेशितः ॥ १४४ ॥

³अलक्तको यथा रक्तो निष्पीड्य पुरुषस्तथा ।
अबलाभिर्बलाद्रक्तः पादमूले निपात्यते ॥ १४५ ॥

एवं स राजा बहुविधं विलप्य तत्प्रभृति दन्तिलस्य प्रसादपराङ्मुखः संजातः । किं बहुना । तस्य राजद्वारे प्रवेशो निवारितः । अथ दन्तिलः प्रसादपराङ्मुखं राजानमवलोक्य चिन्तयामास ।

कोर्थान्प्राप्य न गर्वितो विषयिणः कस्यापदोऽस्तंगताः
स्त्रीभिः कस्य न खण्डितं भुवि मनः को नाम राज्ञां प्रियः ।

---

१ There is no one who is unfit for their love, they have no restriction of age; they enjoy a man whether ugly or handsome only because he is a man. Here understand ताः as the subject of भुञ्जते. २ A man who is attached ( to a woman ) becomes fit to be enjoyed by women as a red piece of cloth which is rubbed by being worn on the buttocks and hangs down with the skirt. रक्त (1) red (2) attached. दशालंबी = दशया आलंबते इति. उप. ३ As the red lac ( the red resin of certain trees ) is squeezed and then thrown down, so is a man who is attached deprived of his substance by women and made to fall prostrate at their feet. निपात्यते Pre. Pass. of the caus. of पत् with नि. ४ In various ways, variedly. ५ Having wept or lamented. ६ Thenceforward. It is equal to ततः प्रभृति. ७ Averse to showing favour. ८ Prohibited. P. P. of the caus. of वृ with नि. ९ Who has not become proud by getting wealth, what sensualist has his miseries ended, whose mind is not disappointed on this earth by women, what man ( I should like to know ) is a favourite with kings, who has not fallen into the jaws of death, what supplicant is honoured, or what man, who is caught in the nets spread for him by the wicked, has come out safe ? अस्तंगत-set. गोचर-reach.

कः कालस्य न गोचरान्तरगतः कोऽर्थी गतो गौरवं
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ॥ १४६ ॥

[1]काके शौचं द्यूतकारे च सत्यं
सर्पे क्षान्तिः स्त्रीषु कामोपशान्तिः ।
क्लीबे धैर्यं मद्यपे तत्त्वचिन्ता
राजा मित्रं केन दृष्टं श्रुतं वा ॥ १४७ ॥

अपरं मयास्य भूपतेरथवान्यस्यापि राजसंबन्धिनः[2] स्वप्नेऽपि नानिष्टं कृतम्। तत्किमेतत्। एवं तं दन्तिलं राजद्वारे विष्कम्भितं[3] विलोक्य संमार्जनकर्ता गोरम्भो विहस्य द्वारपालानिदमूचे। भो भो द्वारपालाः[4] राजप्रसादाधिष्ठितोऽयं[5] दन्तिलः स्वयं निग्रहानुग्रहकर्ता[6] च। तदनेन निवारितेन[7] यथाहं तथा यूयमप्यर्धचन्द्रभाजिनो[8] भविष्यथ। तच्छ्रुत्वा दन्तिलश्चिन्तयामास। नूनमिदमेतस्य गोरम्भस्य चेष्टितम्[9]। अथवा साध्विदमुच्यते।

[10]अकुलीनोऽपि मूर्खोऽपि भूपालं यात्र सेवते।
अपि संमानहीनोऽपि स सर्वत्रापि पूज्यते ॥ १४८ ॥

[11]अपि कापुरुषो भीरुः स्याच्चेन्नृपतिसेवकः।
यत्प्राप्नोति फलं लोकात्तस्यांशमपि नो गुणी ॥ १४९ ॥

---

१ Who has ever seen or heard of purity in the crow, truthfulness in a gambler, forbearance in a serpent, the gratification of the carnal desire in women, courage in an impotent man, the thought or consideration of reality in a drunkard, and friendship in a king? (lit. the king as a friend). २ Of one related to or connected with the king. ३ Obstructed. P. P. of स्कंभ with वि 1 A. 5, 9. P ४ The door-keepers. ५ Who has obtained royal favour. ६ He who awards punishment and shows favour. ७ At the hands of him who is prohibited. ८ The sharers of अर्धचंद्र or अर्धचंद्रदान (being seized by the neck and turned out). ९ Mischief, trick. १० Even that man who is low-born, foolish and destitute of honour, is respected every where, when he serves the king. ११ A worthy or meritorious person does not get even a fraction of that fruit, which even a mean coward does, provided he is the servant of a king.

एवं स बहुविधं विलप्य विलक्षानन[१] उद्वेगाद्[२]गतप्रभावः[३] स्वगृहं गत्वा निशामुखे[४] गोरम्भमाहूय वस्त्रयुगलेन[५] संमान्येदमुवाच[६] । भद्र[७] मया तदा त्वमनुचितस्थाने राजासन उपविष्टो भर्त्सयित्वा[८]पमानितो न रागात्त्वं निःसारितः[९]।[१०] सोपि स्वर्गराज्योपमं[११] तद्वस्त्रयुगलमासाद्य परं परितोषं गत्वा तमुवाच । भोः श्रेष्ठिन्क्षान्तं[१२] मया ते तत् । अस्य कृतसंमानस्य[१३] पश्य मे बुद्धिप्रभावं राजप्रसादं च । एवमुक्त्वा सपरितोषं निष्क्रान्तः । साधु चेदमुच्यते ।

[१४]स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् ।
अहो सुसदृशी चेष्टा तुलायष्टेः खलस्य च ॥ १५० ॥

अथ गोरम्भस्तत्रैव गत्वा योगनिद्रां गतस्य[१५] राज्ञः संमार्जनक्रियां कुर्वन्निदमाह । अहो अविवेको[१६]स्मद्भूपतेर्यत्पुरीषोत्सर्गं कुर्वन्[१७] चिर्भटी[१८]-भक्षणं करोति । तच्छ्रुत्वा राजा सविस्मयं तमुवाच । रे रे गोरम्भ किमप्रस्तुतं[१९] लपसि । गृहकर्मकरत्वात्[२०]त्वां न व्यापादयामि । किं त्वया कदाप्यहमेवंविधं[२१] कर्म समाचरन्दृष्टः । सोब्रवीत् । देव द्यूतासंक्त्या[२२]

---

१ With abashed looks विलक्षं आननं यस्य सः. ब. २ Through agitation or perturbation. ३ Who had lost power. ४ In the evening ( lit. at the beginning of night). ५ A pair of clothes. ६ Having honoured or worshipped. ७ Good friend, good Sir. ८ Having been reproved. ९ Through anger. १० Turned out. ११ Resembling a heavenly kingdom स्वर्गराज्यस्य उपमा यस्य. ब० १२ I have pardoned you ( that fault ). १३ Who has been honoured. कृतः संमान. यस्य. ब. १४ Very similar is the action of a wicked man and also of the beam of a balance, *viz.*, they both rise up or go down even with a little (weight or honour ). १५ This is a Genetive absolute. १६ Thoughtlessness or inconsiderateness. १७ While voiding the excrements. १८ Cucumber. १९ Why do you talk so irrelevantly ? २० On account of your doing my household duties. २१ Doing such an ( absurd ) action. २२ Attachment; addiction.

रात्रिजागरणेन संमार्जनं कुर्वाणस्य मम बलान्निद्रा समायाता । तयाविष्टेन किंचिज्जल्पितम् । तन्न वेद्मि । तत्प्रसादं करोतु स्वामी मे परवशस्येति । एवं राजा श्रुत्वा चिन्तितवान्यन्मयाजन्म पुरीषोत्सर्गं कुर्वता कदापि चिर्भटिका न भक्षिता । तद्यथायं व्यतिकरोऽसंभाव्यो ममानेन व्याहृतस्तथा दन्तिलस्यापीति निश्चयः । तन्मया न युक्तं कृतं यत्स वराकोऽपमानितः । न तादृक्पुरुषाणामेवंविधं चेष्टितं[5] संभाव्यते । तस्याप्रसादेन राजकृत्यानि सर्वाण्यपि शिथिलतां व्रजन्ति । एवमनेकधा विमृश्य दन्तिलमाहूय निजाङ्गवस्त्राभरणादिभिः संयोज्य स्वाधिकारे नियोजयामास ।

[11]अतोऽहं ब्रवीमि यो न पूजयते गर्वादिति ।

संजीवक आह । भद्र एवमेवैतत् । यद्भवताभिहितं तदेव मया कर्तव्यमिति । एवमभिहिते दमनकस्तमादाय पिंगलकसकाशमगमत् । आह च । देव एष मया स संजीवक आनीतः । देवोऽधुना प्रमाणम् । संजीवकोऽपि तं सादरं प्रणम्याग्रतः सविनयं स्थितः । पिंगलकोऽपि तस्य पीनायतककुद्मतो[13] नखकुलिशालंकृतं[14] दक्षिणपाणिमुपरि[15] दत्त्वा मानपुरःसरमुवाच । [16]अपि भवतः शिवम् । कुतस्त्वमस्मिन्वने विजने[17] समायातोऽसि । तेनाप्यात्मवृत्तान्तः कथितः । [19]यथा वर्धमानेन सह वियोगः संजातस्तथा सर्वं निवेदितम् । एतच्छ्रुत्वा पिंगलकः

---

१ Overtaken by it (sleep). २ Being in the power of another, here of course under the influence of sleep. ३ Since birth आजन्म = जन्मनः प्रभृति. ४ Affair, occurrence. ५ Is spoken of. ६ Poor fellow. ७ Are carelessly done or mismanaged. ८ In various ways, in more ways than one. ९ Having considered. ( abs. of मृश् 6 P with वि.) १० With clothes and others taken off his own body. ११ Therefore I say &c. १२ Respectfully, आदरेण सहितं यथा तथा. १३ Of him whose hump was big and large. पीनं च आयतं च ककुद् यस्य तस्य. ब. १४ Adorned with the thunderbolt-like nails. नखमेव कुलिशः. क. तेन अलंकृत. तृ. त. १५ Having placed upon. १६ Is it well with your honour? Is your honour well? १७ Tenantless, uninhabited. विगताः जनाः यस्मात्. ब. १८ Account, history. १९ As how he was separated from Vardhamâna &c.

सादरतरं[1] तमुवाच । वयस्य न भेतव्यम् । मद्भुजपञ्जर[2]परिरक्षितेन यथेच्छं त्वयाधुना वर्तितव्यमन्यच्च नित्यं मत्समीपवर्तिना भाव्यं[3] यतः[4] कारणाद्बह्वपायं रौद्र[5]सत्वनिषेवितं वनं गुरूणामपि सत्वानामसेव्यं[6] कुतः[7] शष्पभोजिनाम् । एवमुक्त्वा सकलमृगपरिवृतो यमुनाकच्छमवतीर्योदकग्रहणं कृत्वा स्वेच्छया तदेव वनं प्रविष्टः । ततश्च करटकदमनकनिक्षिप्त[8]राज्यभारः संजीवकेन सह सुभाषितगोष्ठी[9]मनुभवन्नास्ते । अथवा साध्विदमुच्यते ।

[10]यदृच्छयाप्युपनतं सकृत्सज्जनसंगतम् ।
भवत्यजरमत्यन्तं नाभ्यासक्रममीक्षते ॥ १५१ ॥

संजीवकेनाप्यनेकशास्त्रावगाहना[11]दुत्पन्नबुद्धिप्रागल्भ्येन[12] स्वल्पैरेवाहोभिर्मूढमतिः[13] पिंगलको धीमांस्तथा[14][15] कृतो यथारण्यधर्माद्वियोज्य[16] ग्राम्यधर्मे[17] नियोजितः । शेषः सर्वोपि मृगजनो[18] दूरीभूतस्तिष्ठति । करटकदमनकावपि प्रवेशं[19] न लभेते । अन्यच्च सिंहपराक्रमाभावात्[20]सर्वोपि मृगजनः क्षुधाविष्टः[21] कौदिशीकः[22] संवृत्तः । उक्तं च ।

---

१ More respectfully. २ Protected by the cage of my arms. भुजावेव पंजरः. क. ३ Should be always near me. ४ Because, for. ५ Resorted to by ferocious animals. ६ Unfit to be inhabited. ७ Whence then for &c.? ८ Having entrusted the responsibility of Government to Karataka and Damanaka. करटकदमनकयोः निक्षिप्तः राज्यभारः येन. ब. ९ Conversation on excellent subjects. १० Union with good men when once brought on *accidentally*, becomes everlasting and great, and does not require any repetition. सज्जनसंगत--सज्जनैः संगतम् तृ. त. अजरं = नास्ति जरा यस्य. ब. ११ By plunging into various sciences, by deeply studying the various sciences. १२ By the boldness of talent. १३ Of dull-intellect, a blockhead. १४ Talented, learned. १५ In such a way that he. १६ Being drawn away from the occupation or duties of wild animals. १७ Towards the duties of villagers. १८ Animals ; beasts. १९ Could get no access. २० By reason of the absence of exploits on the part of the lion. २१ Overtaken by hunger. २२ Running away, fugitive.

कालातिक्रमण = neglect of the right moment for



[1] फलहीनं नृपं भृत्याः कुलीनमपि चोन्नतम् ।
संत्यज्यान्यत्र गच्छन्ति शुष्कं वृक्षमिवाण्डजाः ॥ १५२ ॥

तथा च । [2] अपि संमानसंयुक्ताः कुलीना भक्तितत्पराः ।
वृत्तिभंगान्महीपालं त्यक्त्वा यान्ति सुसेवकाः ॥ १५३ ॥

अन्यच्च । [3] कालातिक्रमणं वृत्तेर्यो न कुर्वीत भूपतिः
कदाचित्तं न मुञ्चन्ति भर्त्सिता अपि सेवकाः ॥ १५४ ॥

तथा न केवलं सेवका एवेत्थं भवन्त्यासंसारं समस्तमेतज्जगदपि तावद्रक्षणार्थं सामादिभिरुपायैस्तिष्ठति । तद्यथा । समस्त = whole

[6] देशानामुपरि क्ष्मापा आतुराणां चिकित्सकाः ।
वणिजो ग्राहकाणां च मूर्खाणामपि पण्डिताः ॥ १५५ ॥
प्रमादिनां तथा चौरा भिक्षुका गृहमेधिनाम् ।

---

१ Having deserted a king from whom no fruit is obtained or no benefit is secured, even though he be nobly-born and high-minded, servants go elsewhere, just as birds ( अण्डजा. ) do a dried-up tree. फलहीन may also be taken with वृक्ष in the sense of having no fruits on it. अंडज lit. the egg-born---the birds are so-called because they come out of the eggs after they have been hatched. २ Good servants though treated with respect and devoted, go away by abandoning a king through the stoppage of the means of livelihood, that is, when their allowance is not paid betimes. भक्तितत्पर-भक्त्यां तत्पराः स. त. ३ Servants though scolded never desert that king who does not make any delay in paying them their wages. ४ As far as the world goes. ५ By means of remedies such as सामन् &c. They are :—1. सामन (*n.*) peace, negotiation; 2. दान (*n.*) offering of bribes; 3. भेद (*m.*) sowing dissensions among the enemies and 4. दण्डः punishment, force. ६ By means of snares made ready with *sâma* and others, kings ( क्ष्मापाः ) watch over kingdoms, physicians over sick-persons, traders over customers, wise men over fools, thieves over the careless, beggars over householders, harlots over lovers and artisans over all people, night and day, and enjoy them ( the above mentioned ) according to their power, as aoquatic animals do aoquatic ones. सामादिसज्जितैः--सामादिभिः सज्जितैः. तृ. त. जलज—जलात् जातः जलजः. पं. त.

गणिकाः कामुकानां च सर्वलोकस्य शिल्पिनः ॥ १५६ ॥

सामादिसज्जितैः पाशैः प्रतीक्षन्ते दिवानिशम् ।
भुञ्जते च यथाशक्ति जलजाञ्जलजा यथा ॥ १५७ ॥

अथवा साध्विदमुच्यते ।

[1] सर्पाणां च खलानां च परद्रव्यापहारिणाम् ।
अभिप्राया न सिध्यन्ति तेनेदं वर्तते जगत् ॥ १५८ ॥

[2] अत्तुं वाञ्छति शाम्भवो गणपतेराखुं क्षुधार्तः फणी
तं च क्रौञ्चरिपोः शिखी गिरिसुतासिंहोपि नागाशनम् ।
इत्थं यत्र परिग्रहस्य घटना शम्भोरपि स्याद्गृहे
तत्रान्यस्य कथं न भावि जगतो यस्मात्स्वरूपं हि तत् ॥ १५९ ॥

ततः क्षुत्क्षामकण्ठौ परस्परं करटकदमनकौ मन्त्रयेते। तत्र दमनको ब्रूते । भद्र आवां तावदप्रधानतां[3] गतौ । एष पिङ्गलकः संजीवकानुरक्तः स्वव्यापारपराङ्मुखः स्थितः । सर्वोपि परिजनो गतः । तत्किं क्रियते । करटक आह । यद्यपि त्वदीयवचनं[4] न करोति तथापि स्वामी स्वदोषनाशाय[5] वाच्यः । उक्तं च ।

---

१ The objects in view of snakes, wicked men and of those who deprive others of their wealth, do not succeed and, therefore, this world exists. परद्रव्यं अपहरन्तीति-परद्रव्यापहारिणः उप.
२ The hungry snake of S'iva (S'ambhu) wishes to devour the mouse of Ga*n*apati ; the peacock of the enemy of *Krauncha* (Kârtikeya) on his part, wishes to devour him (the snake) ; the lion of *the daughter of mountain* (गिरिजा) also wishes to devour him (snake) ; when such is the occurrence among the members of the family even of Sanibhu, how will not the same happen in the house of another (ordinary mortal)? For such indeed is the nature of the world. शाम्भव adj. from शंभु. After नागाशनम् understand वाञ्छति. परिग्रह train, retinue. ३ Have been reduced to the state of non-ministers. ४ Does not listen to the advice of. ५ To prevent your own future blame ; in order that you may not be blamed afterwards for being negligent in your duties.

अशृण्वन्नपि बोद्धव्यो मन्त्रिभिः पृथिवीपतिः ।
यथा स्वदोषनाशाय विदुरेणाम्बिकासुतः ॥ १६० ॥
तथा च मदोन्मत्तस्य भूपस्य कुञ्जरस्य च गच्छतः ।
उन्मार्गं वाच्यतां यान्ति महामात्राः समीपगाः ॥ १६१ ॥

तन्वयैव शष्पभोजी स्वामिनः सकाशमानीतः । तत्स्वहस्तेनाङ्गाराः कर्षिताः । दमनक आह । सत्यमेतत् । ममायं दोषो न स्वामिनः । उक्तं च ।

जम्बुको हुडुयुद्धेन वयं चाषाढभूतिना ।
नापिती परकार्येण त्रयो दोषाः स्वयंकृताः ॥ १६२ ॥]

करटक आह । कथमेतत् । सोऽब्रवीत् ।

## ॥ कथा ४ ॥

अस्ति कस्मिंश्चिद्विविक्तप्रदेशे मठायतनम् । तत्र देवशर्मा नाम परिव्राजकः प्रतिवसति स्म । तस्यानेकसाधुजनदत्तसूक्ष्मवस्त्रविक्रयवशात्कालेन महती वित्तमात्रा संजाता । ततः स न कस्यचिद्विश्व-

---

१ Even though a king may not listen, he should be properly counselled by the ministers, as the son of Ambikâ, *viz.*, (धृतराष्ट्र) was advised by Vidura that he might not blame him (Vidura) afterwards. बोद्धव्य = बोधितव्य caus. २ When an intoxicated king and a wild elephant go astray, the ministers or drivers that are near, are blamed. महामात्र (1) ministers. (2) elephant-drivers. ३ You have drawn burning charcoal over yourself with your own hands, that is, you have brought destruction upon your own head. ४ A jackal suffered by the fight of two rams, we at the hands of Ashâdhabhûti, and the female barber for another's business—all the three faults were committed by themselves, *viz.*,—by the very persons that suffered for them. ५ Lonely, solitary. ६ A monastery. ७ A recluse. ८ In consequence of the sale of fine clothes given him by various good persons or sages. ९ In course of time. १० A large measure of property, a large amount of money.

सिति । नक्तंदिनं कक्षान्तरात्तां मा[illegible] न मुञ्चति । अथवा साधु चेदमुच्यते ।

[2]अर्थानामर्जने दुःखमर्जितानां च रक्षणे ।
आये दुःखं व्यये दुःखं धिगर्थाः कष्टसंश्रयाः ॥ १६३ ॥

अथाषाढभूतिर्नाम परवित्तापहारक[3]स्तामर्थमात्रां तस्य कक्षान्तरगतां लक्षयित्वा व्यचिन्तयत् । कथं मयास्येयमर्थमात्रा हर्तव्येति । तदत्र मठे तावद्दृढशिला[4]संचयवशाद्भित्तिभेदो[5]पि नास्त्युच्चैस्तर[6]त्वाच्च द्वारेण प्रवेशो नास्ति तदर्थं मायावचनै[7]र्विश्वास्य[8] च्छात्रतां[9] व्रजामि येन स विश्वस्तः कदाचिद्विश्वासमेति[10] । उक्तं च ।

[11]नाविदग्धः प्रियं ब्रूयात्स्फुटवक्ता न वञ्चकः ।
निःस्पृहो नाधिकारी स्यान्नाकामी मण्डनप्रियः ॥ १६४ ॥

एवं निश्चित्य तस्यान्तिकमुपगम्यों[12] नमः शिवायेति प्रोच्चार्य साष्टाङ्गं[13] प्रणम्य सप्रश्रयमुवाच । भगवन् असारः[14] संसारोयं गिरिनदी-

---

१ The arm-pit. २ There is trouble in acquiring wealth and in protecting that which is obtained, thus there is pain in its acquisition and expenditure. Fie on wealth which is the abode of all miseries ! ३ One who deprived people of their wealth. ४ By reason of a collection of hard stones. ५ Breach of the wall. ६ On account of its being very high. ७ Deceptive speech. ८ Having caused him to confide in me. ९ Shall be ( his ) pupil. १० Places confidence, being inspired with confidence. ११ One who is not clever will not speak what is liked by one ; he who is out-spoken cannot be deceitful ; he who is free from desire, or indifferent will not be an officer and he who has no love-feeling cannot have any liking for ornaments. अकामी–न कामी: न. त. १२ A bow to S'iva ! here the final अ of उपगम्य is dropped before ओम्. १३ By falling prostrate (lit. on the eight limbs) साष्टांगप्रणाम is a very humble mode of obeisance. १४ This world is unreal or unsubstantial. १५ As rapid in its motion as a river running down a hill.

वेगोपमं यौवनं तृणाग्निसमं जीवितं शरदभ्रच्छायासदृशा भोगाः स्वप्नसदृशो मित्रपुत्रकलत्रभृत्यवर्गसंयोगः । एवं मया सम्यक्परिज्ञातम् । तत्किं कुर्वतो मे संसारसमुद्रोत्तरणं भविष्यति । तच्छ्रुत्वा स सादरमाह । वत्स धन्योसि यत्प्रथमे वयस्येवं विरक्तिभावः । उक्तं च ।

पूर्वे वयसि यः शान्तः स शान्त इति मे मतिः ।
धातुषु क्षीयमाणेषु शमः कस्य न जायते ॥ १६५ ॥

आदौ चित्ते ततः काये सतां संपद्यते जरा ।
असतां तु पुनः काये नैव चित्ते कदाचन ॥ १६६ ॥

यच्च मां संसारसागरोत्तरणोपायं पृच्छसि तच्छ्रूयताम् ।

शूद्रो वा यदि वान्योपि चण्डालोपि जटाधरः ।
दीक्षितः शिवमन्त्रेण सभस्माङ्गी शिवो भवेत् ॥ १६७ ॥

षडक्षरेण मन्त्रेण पुष्पमेकमपि स्वयम् ।
लिङ्गस्य मूर्ध्नि यो दद्यान्न स भूयोभिजायते ॥ १६८ ॥

---

१ Like the fire made by kindling grass. २ Like the shadow of a cloud in the Sarat season. ३ Collection, multitude. ४ Union. ५ Going beyond or crossing the sea in the form of this worldly existence. ६ The absence of all worldly desires. Here विरक्ति alone would have expressed the intended sense and so भाव is superfluous. ७ It is my opinion that he, whose passions are subdued in the first stage of life, is really शांत ( free from passions ); who does not become शांत when the humours of the body are wasted or dried up. क्षीयमाण is here put for क्षीण. ८ There is old age first in the mind and then in the body of the good; but as regards the evil-minded, there is old age in the body and never in the mind. ९ Whether a person be a Sûdra by caste or any other person or even a low-caste, when he wears matted hair or becomes an ascetic, is consecrated with the mantra of S'iva and smears his body with ghee, he becomes S'iva himself. १० He, who will place on the head of the *linga*, even one flower with his own hand by repeating the *mantra* of *six syllables* ( ओं नमः शिवाय ), will never be born again, *i. e.*, will get absolution.

तच्छ्रुत्वाषाढभूतिः पादौ¹ गृहीत्वा सप्रश्रयमिदमाह । भगवन्दीक्षया² मेनुग्रहं कुरु । ततो देवशर्माह । वत्स अनुग्रहं ते करिष्यामि, परंतु रात्रौ त्वया मठमध्ये न प्रवेष्टव्यं यत्कारणं निःसङ्गता³ यतीनां युज्यते तव ममापि च । उक्तं च ।

⁴दुर्मन्त्रान्नृपतिर्विनश्यति यतिः सङ्गात्सुतो लालना-
द्विप्रोनध्ययनात्कुलं कुतनयात्स्नेहः प्रवासाश्रयात् ।
मैत्री चाप्रणयात्समृद्धिरनयाच्छीलं खलोपासना-
त्स्त्री गर्वादनवेक्षणादपि कृषिस्त्यागात्प्रमादाद्धनम् ॥ १६९ ॥

तत्त्वया व्रतग्रहणानन्तरं⁵ मठद्वारे तृणकुटीरके⁶ शयनीयम् । स चाह । भगवन्भवदादेशः प्रमाणम् । परत्र हि तेन प्रयोजनम्⁷ । अथ कृतशयनसमयं⁸ देवशर्मानुग्रहं कृत्वा शास्त्रोक्तविधिना⁹ शिष्यतामनयत्¹⁰ । सोपि हस्तपादावमर्दनादिपरिचर्यया¹¹ तं परितोषमनयत् । पुन-

---

१ Having clasped his feet by way of adoration. २ By consecration or initiation. ३ Absence of attachment to the worldly objects. ४ A king is ruined by evil counsel, an ascetic by attachment to worldly objects, a son by over-indulgence, a Brâhmaṇa by want of the study of the scriptures, a family by a wicked son, affection by having recourse to travelling, frendship by want of real affection, prosperity by iniquity, good disposition by serving the wicked, a woman by pride, husbandry by want of superintendence and wealth by charity and carelessness. The reading for the last two lines is different in Bhartrihari from which the verse is quoted. It runs thus ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रयात् । मैत्री चाप्रणयात्समृद्धिरनयात्त्यागात्प्रमादाद्धनम्. The only difference is of स्त्री गर्वात् for ह्रीर्मद्यात् for all the rest are found in the verse though in a different order. ५ After taking the vow. ६ A hut. ७ There is use of it in the world to come or the next world ( परत्र ). ८ Who had agreed to the condition of sleeping in the hut. This is an adjective of तं understood. ९ According to the ceremony prescribed in the S'astras. १० Made him (his) disciple. ११ By means of service chiefly consisting in shampooing the hands and feet. हस्तपादावमर्दनं आदिर्यस्यां सा. ब.

स्तथापि मुनिः कक्षान्तरान्मात्रां न मुञ्चति । अथैवं गच्छति काले आषाढभूतिश्चिन्तयामास । अहो न कथंचिदेष मे विश्वासमेति । तत्किं दिवापि शस्त्रेण मारयामि किंवा विषं प्रयच्छामि किंवा पशुमिव व्यापादयामीति । एवं चिन्तयतस्तस्य देवशर्मणोपि शिष्यपुत्रः कश्चित्परिग्रामन्नामन्त्रणाय समायातः । आह च । भगवन्पवित्रारोपणकृते मम गृहमागम्यतामिति । तच्छ्रुत्वा देवशर्माषाढभूतिना सह हृष्टमना: प्रस्थितः । अथैवं गच्छतोरग्रे काचिन्नदी समायाता । तां दृष्ट्वा मात्रां कक्षान्तरादवतार्य कन्थामध्ये सुगुप्तां निधाय स्नात्वा देवार्चनं विधाय तदनन्तरमाषाढभूतिमिदमाह । भो आषाढभूते यावदहं पुरीषोत्सर्गं विधायागच्छामि तावदेषा कन्था योगेश्वरस्य सावधानेन रक्षणीया । इत्युक्त्वा गतः । आषाढभूतिरपि तस्मिन्नदर्शनीभूते मात्रामादाय सत्वरं प्रस्थितः । देवशर्मापि च्छात्रगुणानुरञ्जितमनाः सुविश्वस्तो यावदुपविष्टस्तिष्ठति तावत्सुवर्णरोमदेहयूथमध्ये हुडुयुद्धमपश्यत । अथ रोषवशाद्धुडुयुगलस्य दूरमपसरणं कृत्वा भूयोपि समुपेत्य ललाटपट्टाभ्यां प्रहरतो भूरि रुधिरं पतति । तच्च जम्बुको जिह्वालौल्याद्रङ्गभूमिं प्रविश्यास्वादयति । देवशर्मापि विलो-

---

१ As time rolled on, in course of time. २ By any means whatever. ३ Caus. of मृ to die, to kill. ४ While he was so thinking ( Gen. absolute. ) ५ For giving him invitation. ६ Putting on of the पवित्र, a ring of Darbha grass. It is a ceremony at the performance of which the members of a sect meet together and put on the rings of *darbha* or Pavitras. ७ Glad at heart. ८ While they ( two ) were thus going. ९ Having taken down. १० A patched garment worn by Yogins. ११ Well-guarded. १२ Of the lord of yogins, S'iva. १३ When he had disappeared. १४ Whose mind was attached to his pupil by reason of his virtues. छात्रगुणेषु अनुरंजितं मनः यस्य सः. ब. १५ Remained sitting, was yet sitting. १६ Through anger. १७ While the pair of rams having withdrawn to a long distance, again came together and were striking one another. १८ Through the greed of the tongue. १९ Stage.

क्याचिन्तयत् । अहो मन्दमतिरयं जम्बुकः । यदि कथमप्यनयोः संघट्टे[1] पतिष्यति तन्नूनं मृत्युमेष्यतीति तर्कयामि । अत्रान्तरे तथैव रक्तास्वादनलौल्यान्मध्ये[2] प्रविशंस्तयोः शिरः संपाते[3] पतितो मृतश्च शृगालः । देवशर्मापि तं शोचमानो मात्रामुद्दिश्य[4] शनैः शनैः प्रस्थितो यावदाषाढभूतिं न पश्यति ततश्चौत्सुक्येन[5] शौचं[6] विधाय यावत्कन्थामालोकयति[7] तावन्मात्रां न पश्यति । ततश्च, हा हा मुषितोऽस्मीति[8] जल्पन्पृथिवीतले निपपात । ततः क्षणाच्चेतनां लब्ध्वा[9] भूयोपि समुत्थाय फूत्कर्तुमारब्धः[10] । भो आषाढभूते क मां वञ्चयित्वा गतोसि । तद्देहि मे प्रतिवचनम्[11] । एवं बहु विलप्य तस्य पदपद्धतिमन्वेषयन्[12] शनैः शनैः[13] प्रस्थितः । एवं स गच्छन्संध्यासमये[14] कंचिद्ग्राममाससाद । अथ तस्माद्ग्रामात्कश्चित्कौलिकः[15] सभार्यो[16] मद्यपानकृते[17] समीपवर्तिनि[18] नगरे प्रस्थितः । देवशर्मापि तमालोक्य प्रोवाच । भो भद्र वयं सूर्योढा[19] अतिथयस्तवान्तिकं प्राप्ताः । न कमप्यत्र ग्रामे जानीमः । तद्गृह्यतामतिथिधर्मः[20] । उक्तं च ।

[21]संप्राप्तो योतिथिः सायं सूर्योढो गृहमेधिनाम् ।
पूजया तस्य देवत्वं लभन्ते गृहमेधिनः ॥ १७० ॥

---

१ Collision. २ Through the greed of tasting the blood. ३ Collision, striking together. ४ Towards, in the direction of. ५ With anxiety. ६ Having cleansed his body &c ७ Searched his कन्था for the मात्रा put into it. ८ I am robbed. ९ Having regained consciousness. १० To scream or cry aloud. ११ Reply. १२ The trace of his foot-steps (tracing) his foot-prints. १३ Slowly and slowly. १४ Evening, the time of evening. १५ A weaver. १६ Accompanied with his wife भार्यया सहितः सहपूर्वपद. ब. १७ For the sake of. १८ Being near. १९ Evening guests. सूर्योढ=सूर्य + ऊढ brought by or along with the sun. तृ. त. २० Let the duties towards a guest be done (lit. accepted) by you. २१ House-holders obtain godhood by the worship of that guest who comes in the evening to their houses. Here सायं is redundant as सूर्योढः expresses the idea of evening.

यथा च । तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
सतामेतानि हर्म्येषु नोच्छिद्यन्ते कदाचन ॥ १७१ ॥
स्वागतेनाग्नयस्तृप्ता आसनेन शतक्रतुः ।
पादशौचेन गोविन्दो अर्घ्याच्छम्भुस्तथातिथेः ॥ १७२ ॥

कौलिकोपि तच्छ्रुत्वा भार्यामाह । प्रिये गच्छ त्वमतिथिमादाय गृहं प्रति । पादशौचभोजनशयनादिभिः सत्कृत्य त्वं तत्रैव तिष्ठ । अहं तव कृते प्रभूतमासवमानेष्ये । एवमुक्त्वा प्रस्थितः । सापि भार्या पुंश्चली तमादाय प्रहसितवदना देवदत्तं ध्यायन्ती गृहं प्रतस्थे । अथवा साधु चेदमुच्यते ।

दुर्दिवसे सितपक्षे दुःसंचारासु नगरवीथीषु ।
पत्यौ विदेशयाते परं सुखं जघनचपलायाः ॥ १७३ ॥

---

१ Grass ( for sitting upon ), ground, water and fourthly agreeable speech–these are never refused ( lit. cut off ) in the houses of the good. Another reading for सतामेतानि हर्म्येषु is एतान्यपि सतां गेहे which means the same. २ Fire is satisfied by the hospitality shown to a guest, Indra, by the seat given to him, Govinda, by cleaning his feet, S'ambhu, by the arghya ( offering given to guests and consisting of various ingredients ). ३ सत्कृत्य abs. of कृ 8 U with सत्. Here सत् has the force of a preposition. ४ Spirituous liquor. ५ An unchaste woman. ६ With cheerful looks. प्रहसितं वदनं यस्याः सा. ब. ७ देवदत्त is here used for the guest देवशर्मा-as it generally does for any name whatever. ८ Thinking of or contemplating. ९ When the day is cloudy, when there is the dark fortnight, when the streets of a town are impassable by darkness, and when the husband is gone abroad (to a foreign country ) great is the delight felt by a libidinous woman. The reading for असितपक्षे is घनतिमिरे when there is pitchy darkness; and for पत्यौ विदेशयाते--पत्युर्विदेशगमने--during the sojourn of the husband abroad. वीथी a row of streets. विदेशं याते--विदेशयाते.

तथा च। [1]पर्यंकेष्वास्तरणं पतिमनुकूलं मनोहरं शयनम्।
तृणमिव लघु मन्यन्ते कामिन्यश्चौर्यरतलुब्धाः॥ १७४॥
तथा च। [2]केलिः प्रदहति मज्जां शृङ्गारोऽस्थीनि चाटवः कटवः।
बन्धक्याः परितोषो न स्यादनभीष्टदंपत्योः॥ १७५॥
[3]कुलपतनं जनगर्हां बन्धनमपि जीवितव्यसंदेहम्।
अंगीकरोति तत्क्षणमबला परपुरुषसंरक्ता॥ १७६॥

अथ सा गृहं गत्वा देवशर्मणे गतास्तरणां भग्नां खट्वां समर्प्येदमाह। भो भगवन्यावदहं ग्रामादागतां स्वसखीं संभाव्य द्रुतमागच्छामि तावत्त्वया मद्गृहेऽप्रमत्तेन भाव्यम्। एवमभिधाय शृंगारविधिं विधाय यावद्देवदत्तमुद्दिश्य व्रजति तावत्संमुखो मदविह्वलांगो

---

१ Those women, who are addicted to illicit sexual intercourse, regard the beds ( spread on bedsteads ) the loving husband and the beautiful couch, as worthless as grass. अनुकूल lit. favourable and hence, fond, loving. चौर्यरतलुब्धाः. ष. त. २ The love-sport ( of the husband ) burns the marrow of an adulteress, his passion her bones, and his loving address is unpleasant to her; no happiness is enjoyed by those husband and wife who are not liked by each other. बन्धकी, पुंश्चली, जघनचपला are all used in the same sense in these verses. अनभीष्ट च दम्पती च = अनभीष्टदम्पती तयोः, ३ A woman attached to a man other than her husband, most readily ( the very moment of her attachment ) prefers ( accepts ) the falling off from her family, the censure of the people, confinement, and even danger to life ( to any thing else ). कुलपतनं. पं. त. अबला lit. one having no strength and hence, a female. संरक्ता P. P. of रंज् with सम्. ४ Without a bed, that which has no bed on. गतास्तरणा—गतम् आस्तरणं यस्याः सा. ब. ५ An inferior kind of bed-stead. ६ Having offered, having given. (abs. of अर्प् with सम्. caus. of ऋ). ७ This is a term used in addressing reverend personages. ८ Having honoured (abs. of the caus. of भू 1 P. with सम् ). ९ Quickly. १० Careful, cautious. ११ The ceremony of decorating the person with ornaments &c.; decoration. १२ Before, in front. १३ With limbs powerless through intoxication.

मुक्तकेशः पदेपदे स्खलन्गृहीतमद्यभाण्डस्तस्याः पतिः समायातः। तं च दृष्ट्वा सा द्रुततरं व्याघुट्य स्वगृहं प्रविश्य मुक्तशृंगारा यथा पूर्वमभवत्। कौलिकोपि तां कृताद्भुतशृङ्गारां पलायमानां विलोक्य प्रागेव कर्णपरंपरया तस्या अपवादश्रवणात्क्षुभितहृदयः स्वाकारं निगूहमानः सदैवास्ते। ततश्च तथाविधं चेष्टितमवलोक्य दृष्टप्रत्ययः क्रोधवशंगतो गृहं प्रविश्य तामाह। पुंश्चलि क्व प्रस्थितासि। सा प्रोवाच। अहं त्वत्सकाशादागता न कुत्रचिन्निर्गता। तत्किं मद्यवशादप्रस्तुतं वदसि। अथवा साधु चेदमुच्यते।

[१५]वैकल्यं धरणीपातमयथोचितजल्पनम्।
संनिपातस्य चिह्नानि मद्यं सर्वाणि दर्शयेत् ॥ १७७ ॥
[१६]करस्पन्दोम्बरत्यागस्तेजोहानिः सरागता।
वारुणीसङ्गजावस्था भानुनाप्यनुभूयते ॥ १७८ ॥

सोपि तच्छ्रुत्वा प्रतिकूलवचनं वेषविपर्ययं चावलोक्य तामाह।

---

१ With the hair let loose or in disorder. २ Stumbling or tripping at each step. ३ Carrying a vessel filled with wine. गृहीतं मद्यभांडं येन. ब. ४ Having returned or fled back. ( abs. of घुट् 1 A. with व्या). ५ She who had put off her decorations. ६ As before. ७ Extraordinary, such as was not seen by him before. ८ Already, before this time. ९ From ear to ear, by rumour or hearsay. १० Indignant at heart by hearing evil reports abount her. ११ Cf. 3, p. 42. १२ One who has seen an evidence and thus obtained conviction of the rumours heard before. १३ Gone into the power of anger, that is, beside himself with anger. १४ Through the influence of wine. १५ Liquor displays all the signs of संनिपात ( the morbid state of the three humours of the body producing dangerous illness and fever ) viz., agitation of mind, falling down on the ground and talking unbecoming or irrelevant language. अयथोचितजल्पनं. क. १६ The sun has his rays throbbing or quivering, he quits the sky, loses his lustre, assumes redness, and so he experiences a condition produced from contact with वारुणी the western quarter ( so called because it is the region of वरुण ). When वारुणी means wine, the words कर, अम्बर, तेज and सरागता mean hand, garment, energy or spirit and fury or violence. वारुणीसंगजा-वारुण्याः संगात् जाता qualifying अवस्था. १७ The change of dress.

पुंश्चलि चिरकालान्मया श्रुतस्तवापवादः । तदद्य स्वयं संजातप्रत्ययस्तव यथोचितं निग्रहं करोमीत्यभिधाय लगुडप्रहारैस्तां जर्जरितदेहां विधाय स्थूणया सह दृढबन्धनेन बध्वा सौपि मदविह्वलो निद्रावशमगमत् । अत्रान्तरे तस्याः सखी नापिती कौलिकं निद्रावशंगतं विज्ञाय तां गत्वेदमाह । सखि स देवदत्तस्तस्मिन्स्थाने त्वां प्रतीक्षते तच्छीघ्रं गम्यतामिति । सा चाह । पश्य मेवस्थाम् । तत्कथं गच्छामि । ब्रूहि गत्वा तं कामिनं यदत्रावसरे न त्वया सह संगमः । सा प्राह । सखि मा मैवं वद । नायं कुलटाधर्मः । उक्तं च ।

"विषमस्थस्वादुफलग्रहणव्यवसायनिश्चयो येषाम् ।
उष्ट्राणामिव तेषां मन्येहं शंसितं जन्म ॥ १७९ ॥

तथा च । "संदिग्धे परलोके जनापवादे च जगति बहुचित्रे ।
स्वाधीने पररमणे धन्यास्तारुण्यफलभाजः ॥ १८० ॥

अन्यच्च । "यदि भवति दैवयोगात्पुमान्विरूपोपि बन्धकी रहसि ।
न तु कृच्छ्रादपि भद्रं निजकान्तं सा भजत्येव ॥ १८१ ॥

---

१ Cf. 12, p. 67. २ Chastisement, punishment. ३ With the strokes of a stick or cudgel. ४ Whose body was disabled (by beating). ५ The post or pillar of a house. ६ A female barber. ७ Under the influence of sleep. ८ अत्रावसरे = अस्मिन्नवसरे. This use of अत्र for अस्मिन् and तत्र for तस्मिन् is very frequent in the Panchatantras. ९ An adulterous or unchaste woman. १० I think that the birth of those, whose determination is to make efforts to seize or pluck sweet fruits lying in difficult places, is praiseworthy like that of camels whose &c. The love of camels for thorny shrubs is well-known. ११ The attainment of the next world being doubtful, the public censure being so varied in this world and *the husband of another* (paramour) being devoted, blessed are those who enjoy the fruit of youthfulness. स्वाधीन lit. within one's power. १२ Even if unfortunately a man be ugly, an adulteress enjoys him in private and not her own husband though handsome, even at great risk or chance of incurring a trouble. भद्र lovely, beautiful.

सा ब्रवीत् । यद्येवं तर्हि कथं दृढबन्धनेन[1] बद्धा सती तत्र गच्छामि । निश्चितमस्याः पापात्मा[2] मत्पतिः । नापित्याह । सखि मदविह्वलः[3] सूर्यकरस्पृष्टः प्रबोधं यास्यति[4] । तदहं त्वामुन्मोचयामि[5] । मामात्मस्थाने[6] बद्ध्वा द्रुततरं देवदत्तं संभाव्यागच्छ । साब्रवीत् । एवमस्त्विति । तदनु[7] सा नापिती तां स्वसखीं बन्धनाद्विमोच्य तस्याः स्थाने यथापूर्वमात्मानं बद्ध्वा तां देवदत्तसकाशे संकेतस्थानं[8] प्रेषितवती[9] । तथानुष्ठिते कौलिकः कस्मिंश्चित्क्षणे[10] समुत्थाय किंचिद्गतकोपो[11] विमदस्तामाह[12] । हे परुषवादिनि यद्[13]यप्रभृति गृहान्निष्क्रमणं[14] न करोषि न च परुषं वदसि ततस्त्वामुन्मोचयामि । नापित्यपि स्वरभेदभयाद्यावन्न[15] किंचिदूचे तावत्सोपि भूयो भूय[16] इदमेवाह । अथ सा यावत्प्रत्युत्तरं न प्रयच्छति तावत्तेन कुपितेन तीक्ष्णशस्त्रमादाय[17] तस्या नासिकाच्छेदोऽकारि[18][19] । आह च । रे[20] पुंश्चलि तिष्ठेदानीं न त्वां भूयस्तोषयिष्यामीति विलप्य पुनरपि निद्रावशमगमत् । देवशर्मापि वित्तनाशात्क्षुत्क्षामकण्ठो[21] नष्टनिद्रस्तत्सर्वं[22] स्त्रीचरित्रमपश्यत्[23] । सापि कौलिकभार्या स्वेच्छया[24] देवदत्तेन सह सुरतसुखमनुभूय[25] कस्मिंश्चित्क्षणे स्वगृहमागत्य नापितीमिदमाह । अपि शिवं भवत्याः ।

---

१ Tied with strong ropes. २ Wicked, evil-minded. ३ Helpless through intoxication. ४ Will awake when touched by the rays of the sun. ५ Free or set at liberty, the caus. for the primitive उन्मुञ्चामि. ६ Having tied me (to the post) in your place. ७ Thereafter, after that. ८ To the place of appointment. ९ Sent. P. P. Act. of इष् 1 U. with प्र. १० In a certain moment. ११ Whose anger was a little pacified. १२ Free from intoxication. विगतः मदः यस्य. ब. १३ यत् = यदि If. १४ Going out, issuing out. १५ Through the fear of betraying herself by her voice ( being found to be different from that of the कौलिक's wife ). १६ Again and again १७ Sharp, edged. १८ The cutting of the nose. १९ Passive aorist of कृ. २० Oh, a term of address to persons of both sexes. २१ Here वित्तनाशात् is not the cause of क्षुत्क्षामकण्ठ as one would expect. The two are to be taken separately. २२ Who had lost repose. २३ The conduct of woman. २४ At her pleasure, as she liked. २५ Having enjoyed the pleasure of sexual intercourse.

मायं पापात्मा मम गताया[१] उत्थितः । नापित्याह । शिवं नासिकया विना शेषस्य शरीरस्य । तद्धुतं मां मोचय यावन्मायं पश्यति येन स्वगृहं गच्छामीति । तथानुष्ठिते भूयोपि कौलिक उत्थाय तामाह । पुंश्चलि, किमद्यापि न वदसि । किं भूयोप्यतो दुष्टतरं[२] कर्णच्छेदादिनिग्रहं[३] करोमि । अथ सा सकोपं[४] साधिक्षेपमिदमाह । धिग्मूढ को मां महासतीं[५] धर्षयितुं[६] व्यङ्गयितुं[७] च समर्थः । ततः शृण्वन्तु सर्वे लोकपालाः[८] ।

[९]आदित्यचन्द्रावनिलोनलश्च ।
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च संध्ये
धर्मो हि जानाति नरस्य वृत्तम् ॥ १८२ ॥

तद्यदि मम सतीत्वमस्ति[१०] मनसापि परपुरुषो नाभिलषितस्[११]ततो देवा भूयोपि मे नासिकां तादृग्रूपाम्[१२]अक्षतां[१३] कुर्वन्तु । अथवा यदि मम चित्ते परपुरुषस्य भ्रान्तिरपि[१४] भवति ततो मां भस्मसान्नयन्तु[१५] । एवमुक्त्वा भूयोपि तमाह । भो दुरात्मन्पश्य मे सतीत्वप्रभावेण तादृगेव नासिका संवृत्ता । अथासावुल्मुक[१६]मादाय यावत्पश्यति तावत्-

---

१ After I went away. २ More cruel than this. ३ The punishment of cutting the ears &c. ४ Reproachfully. ५ A very virtuous lady. ६ To insult or injure. ७ To maim or mutilate. It is a denom. from व्यंग. ८ The regents of the quarters. ९ The sun, the moon, wind, fire, the sky, the earth, water, the heart, Yama ( the god of death ), the day, the night and the two twilights and even religion, know the conduct of man. Here the verb agrees with the nearest subject, *viz.*, धर्मः. For धर्मो हि another reading is धर्मोपि. १० Chastity ११ Desired or wished for. P. P. of लष् 1 P. with अभि. १२ Of the same form as before. तादृक् रूपं यस्याः सा. ब. १३ Unhurt or unwounded. P. P. of क्षण् 8 U. १४ Delusion, or glimmering idea. १५ Reduce me to ashes. सात् is a तद्धित affix denoting complete change into that which is indicated by the base. १६ A fire-brand.

नासिकां च भूतले रक्तप्रवाहं च महान्तमपश्यत् । अथ स तं मैनास्त्रां बन्धनाद्विमुच्य शय्यायामारोप्य च चाटुशतैः पर्यपत् । देवशर्मापि च सर्ववृत्तान्तमालोक्य विस्मितमना इदमाह ।

शम्बरस्य च या माया या माया नमुचेरपि ।
बलेः कुम्भीनसेश्चैव सर्वास्ता योषितो विदुः ॥ १८३ ॥
हसन्तं प्रहसन्त्येता रुदन्तं प्ररुदन्त्यपि ।
अप्रियं प्रियवाक्यैश्च गृह्णन्ति कालयोगतः ॥ १८४ ॥
उशना वेद यच्छास्त्रं यच्च वेद बृहस्पतिः ।
स्त्रीबुध्या न विशेष्येत तस्माद्रक्ष्याः कथं हि ताः ॥ १८५ ॥
अनृतं सत्यमित्याहुः सत्यं चापि तथानृतम् ।
इति यास्ताः कथं धीरैः संरक्ष्याः पुरुषैरिह ॥ १८६ ॥

अन्यत्राप्युक्तम् । नातिप्रसङ्गः प्रमदासु कार्यो
नेच्छेद्बलं स्त्रीषु विवर्धमानम् ।
अतिप्रसक्तैः पुरुषैर्यतस्ताः
क्रीडन्ति काकैरिव लूनपक्षैः ॥ १८७ ॥

१ A stream of blood. २ Whose mind was struck with wonder. ३ With hundreds of sweet words. ४ Women know all those tricks which were known by S'ambara, Namuchi, Bali and Kumbhinasi—these were demons well versed in deceitful arts. विदुः optional form for विदन्ति from विद् 2 P. to know. ५ These ( women ) smile with him who smiles, cry with him who cries, and captivate or win over him who is unfavourable by pleasing words, according as occasions arise [ प्रहस् and प्ररुद् are used to show that they do more than others ]. ६ That science which उशनस् ( the preceptor of the demons ) knew and that which बृहस्पति knew, cannot be distinguished from the talent ( बुध्या: ) of a woman, i. e., it cannot be more than that known by women, how are they to be protected ? विशेष्येत Pot. 3rd P. Sing. Pass. of शिष् 1 P with वि. ७ How should those ( women ), who say what is false as true, and also what is true as false, be protected by wise men in this world ? ८ It is so said elsewhere also. ९ There should not be excessive attachment to women, one should not wish them to increase in strength, since they sport with those who are fondly attached to them as if with crows whose wings are clipped.

[1]सुमुखेन वदन्ति वल्गुना प्रहरन्त्येव शितेन चेतसा ।
मधु तिष्ठति वाचि योषितां हृदये हालाहलं महद्विषम् ॥१८८॥
[2]अत एव निपीयतेधरो हृदयं मुष्टिभिरेव ताड्यते ।
पुरुषैः सुखलेशवञ्चितैर्मधुलुब्धैः कमलं यथालिभिः ॥१८९॥
[3]कार्कश्यं स्तनयोर्दृशोस्तरलतालीकं मुखे दृश्यते
कौटिल्यं कचसंचये प्रवचने मान्द्यं त्रिके स्थूलता ।
भीरुत्वं हृदये सदैव कथितं मायाप्रयोगः प्रिये
यासां दोषगणो गुणा मृगदृशां ताः किं नराणां प्रियाः ॥१९०॥
अपि च । [4]आवर्तः संशयानामविनयभवनं पत्तनं साहसानां
दोषाणां संनिधानं कपटशतमयं क्षेत्रमप्रत्ययानाम् ।

---

१ They ( women ) speak sweetly with their beautiful mouths and strike with their sharp or hard hearts ; there is honey in the speech, while there is the terribly deadly poison in the hearts ( of women ). २ It is for this reason that the lower lip is drunk in ( kissed ), and the heart is beaten with the fists by men deceived by a particle of happiness or pleasure, as a lotus is by bees attracted by the honey therein. ३ How should those women whose apparent good qualities are a bundle of defects be dear to men ? for, there is firmness in the breasts ( that is, hardness of heart ), there is sparkling lustre in the eyes ( fickleness or unsteadiness ) elegance ( falsehood ) in the face, waviness ( crookedness ), in the hair, gravity ( dulness ) in the speech, fulness ( clumsiness ) in the hips, there is said to be bashfulness ( timidity ) in the heart and love ( trick ) towards the lover. मृगदृश्–मृगस्य दृशौ इव दृशौ यस्याः सा. ब. मायाप्रयोगः the use of tricks. ४ Who has created in this world this machine in the shape of a woman full of the opposite qualities of poison and nectar for the destruction of virtue ? for it is a whirlpool of doubts, an abode of immodesties, the chief seat of daring or fool-hardiness, the proximity of defects, a thing made up of hundreds of tricks, and a field of disbeliefs, and it is such that it cannot be fathomed by even the best and cleverest of men, and is a box full of all falsehoods or illusions. नरवरवृषभ here नरवर is sufficient to express the intended meaning and so वृषभ is superfluous.

दुर्गाह्यं यन्महद्भिर्वरवरवृषभैः सर्वमायाकरण्डं
स्त्रीयन्त्रं केन लोके विषममृतमयं धर्मनाशाय सृष्टम्॥१९१॥

[1]एता हसन्ति च रुदन्ति च कार्यहेतो-
र्विश्वासयन्ति च परं न च विश्वसन्ति ।
तस्मान्नरेण कुलशीलवता सदैव
नार्यः श्मशानघटिका इव वर्जनीयाः ॥ १९२ ॥

[2]कुर्वन्ति तावत्प्रथमं प्रियाणि
यावन्न जानन्ति नरं प्रसक्तम् ।
ज्ञात्वाथ तं मन्मथपाशबद्धं
ग्रस्तामिषं मीनमिवोद्धरन्ति ॥ १९३ ॥

किं च । [3]समुद्रवीचीव चलस्वभावाः
संध्याभ्ररेखेव मुहूर्तरागाः ।
स्त्रियः कृतार्थाः पुरुषं निरर्थं
निष्पीडितालक्तकवत्त्यजन्ति ॥ १९४ ॥

---

१ These ( women ) smile and cry, to accomplish their objects, cause others to confide in them, but they themselves do not do so ; therefore, a person of good disposition and noble family, should always avoid women like the earthen jars in a cemetary. Another reading for कुलशीलवता सदैव is कुलशीलसमन्वितेन which is the same as कुलशीलवता. २ First they do what pleases a man so long as they do not know that he is attached to them ; but afterwards having known that he is tied up by the snares of cupid, they catch like a fish which has swallowed the bait. मन्मथपाशबद्धं — मन्मथपाशैर्बद्धं. तृ. त. ग्रस्तं आमिषं येन स. ब. ३ Women, who are as fickle in disposition as the unsteady waves of the sea, and whose love lasts only a moment like the streak of red colour in the cloud of an evening, having gained their object, leave off a man, when without means, like the red lac which is squeezed and thrown away. Here राग has two senses (1) love ; (2) colour. चलस्वभावाः, मुहूर्तरागाः कृतार्थाः and निरर्थं are all ब. compounds.

[1]अनृतं साहसं माया मूर्खत्वमतिलोभता ।
अशौचं निर्दयत्वं च स्त्रीणां दोषाः स्वभावजाः ॥ १९५ ॥
[2]अन्तर्विषमया ह्येता बहिश्चैव मनोरमाः ।
गुञ्जाफलसमाकारा योषितः केन निर्मिताः ॥ १९६ ॥

एवमनेकानि सूक्तानि[3] चिन्तयतस्तस्य परिव्राजकस्य निशा कृच्छ्रेणा[4]तिचक्राम । सा च दूतिका[5] हस्तगतच्छिन्ननासिकाग्रा[6] स्वगृहं गत्वा चिन्तयामास । किमिदानीं कर्तव्यम् । कथमेतन्महच्छिद्रं[7] स्थगयितव्यम्[8] । अथ तस्या एवं विचिन्तयन्त्या भर्ता कार्यवशा[9]द्राजकुले[10] पर्युषितः[11] प्रत्यूषे[12] स्वगृहमभ्युपेत्य द्वारदेशस्थः[13] पौरकृत्योत्सुकतया[14] तामाह । शीघ्रमानीयतां क्षुरभाण्डं[15] येन क्षौरकर्मकरणाय[16] गच्छामि । सापि च्छिन्ननासिका गृहमध्यस्थितैव[17] कार्यकरणापेक्षया[18] क्षुरभाण्डात्क्षुरमेकमादाय तस्याभिमुखं[19] प्रेषयामास[20] । नापितोऽप्युत्सुकतयाभाण्डं क्षुरमालोक्य[21] तदभिमुखमेव[22] तं क्षुरं प्राहिणोत्[23] । एतस्मिन्नन्तरे सा दुष्टो[24]र्ध्वबाहू[25] विधाय फूत्कुर्वती गृहान्निश्चक्राम । पापेनानेन

१ Untruthfulness, daring, illusion, folly, excessive avarice, impurity and hard-heartedness-these are the inborn defects of women. स्वभावजाः = स्वभावात् जाताः पं. त. born with the disposition. २ By whom are these women, who are inwardly filled with poison and outwardly pleasant to look at, and thus resemble the gunja fruits in form, created? गुंजाफलैः समाः आकाराः यासां- ब. विषमया for विषमयी-an inaccuracy. ३ Good or pithy sayings. ४ With great difficulty. ५ A female messenger of love, a go-between. ६ Having the tip of the cut-nose in her hand. हस्तगतं च्छिन्ननासिकाग्रं यस्याः. ब. ७ May mean either a 'hole' or metaphorically a *defect, blemish*. ८ Should be concealed. Pot. P. P. of स्थग 10 P. ९ For some business. १० In the royal palace. ११ Had dwelt. P.P. of वस् 1 P. with परि. १२ In the early morning. १३ Standing at the door. उपपद. स. १४ Through eagerness to do the *work of the citizens*, viz., of shaving. १५ The razor-case. १६ For the business of shaving. १७ (While) standing in the middle of the house, *i. e.*, without coming out. १८ With the object of accomplishing her design. १९ Towards him. २० Sent, threw. २१ Having seen the razor without the case. २२ तदभिमुखं = तस्याः अभिमुखं २३ Sent; Cf. 20. २४ Wicked one. २५ Having thrown up her arms.

मम सदाचारवर्तिन्याः[1] पश्यत नासिकाच्छेदो विहितः । तत्परिज्ञायतां तत्परिज्ञायताम् । अत्रान्तरे राजपुरुषा[2] अभ्युपेत्य तं नापितं लगुडप्रहारैर्जर्जरीकृत्य[3] दृढं बद्ध्वा तया च्छिन्ननासिकया सह धर्माधिकरणस्थानं[4] नीत्वा सभ्यानूचुः[5] । शृण्वन्तु भवन्तः सभासदो यदनेन[6] नापितेनापराधं विना स्त्रीरत्नमेतद्व्यङ्गितम्[7] । तदस्य यद्युज्यते तत्क्रियताम्[8] । ततस्ते सभ्या ऊचुः । रे नापित किमर्थं त्वयेयं स्त्री व्यङ्गिता । किमनया परपुरुषोभिलषित उतस्वित्[9] प्राणद्रोहः[10] कृतः किंवा चौर्यकर्माचरितम्[11] । तत्कथ्यतामस्या अपराधः । अथ तं नापितं तूष्णींभूतं[12] दृष्ट्वा पुनः सभ्या ऊचुः । अहो सत्यमेतद्राजपुरुषाणां वचः । पापात्मायम् । अनेनेयं निर्दोषा[13] वराकी दूषिता । उक्तं च ।

[14]भिन्नस्वरमुखवर्णः शङ्कितदृष्टिः समुत्पतिततेजाः ।
भवति हि पापं कृत्वा स्वकर्मसंत्रासितः पुरुषः ॥ १९७ ॥

तथा च ।

[15]आयाति स्खलितैः पादैर्मुखवैवर्ण्यसंयुतः ।
ललाटस्वेदभाग्भूरिगद्गदं भाषते वचः ॥ १९८ ॥

---

१ Leading a virtuous course of life. २ The king's officers, policemen. ३ Having belaboured him with the strokes of their batons. ४ To the seat of justice. ५ The judges, magistrates. ६ यद् since, because. ७ This jewel of a woman, this excellent woman. ८ Let him, therefore, be dealt with adequately to his crime. ९ Or ; उतस्वित् is used to show doubt or deliberation. १० Conspired against life. ११ Theft. १२ Remaining silent, holding his tongue. १३ This innocent poor woman. वराकी is equal to Marāthi बिचारी, बापडी. १४ A person after committing a wicked deed becomes scared by his own action and consequently his tone is altered, his countenance changes colour, he looks about suspiciously and loses all his lustre. भिन्नौ स्वरमुखवर्णौ यस्य. ब. Similarly शंकितदृष्टि and समुत्पतिततेजाः are Bah. compounds. १५ He, ( one who has done a wrong ) comes ( before the seat of justice ) with faltering steps, his face becomes pale, his forehead is covered with perspiration and his words are very indistinctly uttered. भूरिगद्गदं भूरि गद्गदं यस्मिन् तद् ब. qualifying वचः.

[१]अधोदृष्टिर्भवेत्कृत्वा पापं प्राप्तः सभां नरः ।
तस्माद्यत्नात्परिज्ञेयश्चिह्नैरेतैर्विचक्षणैः ॥ १९९ ॥

अन्यच्च ।

[२]प्रसन्नवदनो हृष्टः स्पष्टवाक्यः सरोषदृक् ।
सभायां वक्ति सामर्षः सावष्टम्भो नरः शुचिः ॥ २००

तदेष दुष्टचरित्र[३]लक्षणो दृश्यते । स्त्रीधर्षणाद्वध्य [४]इति । तच्छूलायामारोप्यतामिति । अथ वध्यस्थाने [५] नीयमानमवलोक्य देवशर्मा तान्धर्माधिकारिणो गत्वा प्रोवाच । भो भोः सभासदः । अन्यायेनैष वराको नापितो वध्यते । साधुसमाचारो[६]ऽयम् । तच्छ्रूयतां मे वाक्यम् । जम्बुको हुडुयुद्धेनेति । अथ ते सभ्या ऊचुः । भो भगवन्कथमेतत् । ततश्च देवशर्मा तेषां त्रयाणामपि वृत्तान्तं सविस्तर[७]मकथयत् । तदाकर्ण्य सुविस्मित[८]मनसस्ते नापितं विमोच्य मिथः[९] प्रोचुः । अहो ।

[१०]अवध्यो ब्राह्मणो बालः स्त्री तपस्वी च रोगभाक् ।
विहिता व्यङ्गिता तेषामपराधे महत्यपि ॥ २०१ ॥

तदस्याः पुनः कर्णच्छेदः[११] कार्यः । तथानुष्ठिते देवशर्मापि वित्तनाश[१२]समुद्भूतशोकरहितः पुनरपि स्वकीयं मठायतनमगमत् ॥

---

१ A man who comes to the seat of justice after committing a crime, looks downwards; he should, therefore, be known by clever persons to be an offender by means of these signs. अधोदृष्टिः. ब. २ A pure (innocent) person is cheerful-looking and jolly, speaks distinctly and looks angrily, speaks before the court with energy or spirit and is undaunted. All the adjectives in this verse are Bah. compounds. ३ Having the signs of a wicked action. दुष्टचरित्रस्य लक्षणानि यस्य सः. ब. ४ So let him be impaled. ५ The place of execution. ६ Well-conducted, of a good conduct. ७ At length, in detail. सविस्तर may be also taken as an adjective as विस्तरेण सह. ब. and may mean detailed. ८ Greatly astonished at heart. ब. ९ Among themselves. १० A Bráhman, a child, a woman, an ascetic, and one who is diseased—these are not to be killed; mutilation is prescribed as punishment for them though the offence committed be very grave. ११ Cutting off of the ear in addition to that of the nose. १२ Without grief arising from the loss of his wealth.

अतोऽहं ब्रवीमि जम्बुको हुडुयुद्धेनेति ।

करटक आह । येन्द्रूर्तोपि देवशर्मा तेनाषाढभूतिना कथं वञ्चितः ।
दमनक आह ।[१]

सुप्रयुक्तस्य दम्भस्य ब्रह्माप्यन्तं न गच्छति ।
कौलिको विष्णुरूपेण राजकन्यां निषेवते ॥ २०२ ॥

करटक आह । भ्रातः कथमेतत् । सोऽब्रवीत् ।

## ॥ कथा ५ ॥

कस्मिंश्चिदधिष्ठाने कौलिकरथकारौ प्रतिवसतः स्म । तत्र तौ जन्मप्रभृति सहचारिणावास्ताम । परस्परमतीव स्नेहपरौ सकलस्थानविहारिणौ सदैव कालं नयतः । अथ कदाचित्तत्राधिष्ठाने कस्मिंश्चिद्देवायतने यात्रामहोत्सवः संवृत्तः । तत्र च नटनर्तकचारणसंकुले नानादेशागतजनावृते तौ सहचरौ भ्राम्यन्तौ काचिद्राजकन्यां करेणुकारूढां सर्वलक्षणसनाथां कञ्चुकिवर्षधरैः परिवारितां देवतादर्शनाय समायातां दृष्टवन्तौ । अथासौ कौलिकस्तां दृष्ट्वा विषार्दित इव दुष्टग्रहगृहीत इव कामशरैर्हन्यमानः सहसा भूतले निपपात । अथ तं तद्-

---

१ Though shrewd, cautious. २ Even Brahman cannot go to the end of that hypocricy which is well-managed, a weaver enjoyed a princess in the disguise of Vishnu. ३ A carpenter. ४ Dwelt. स्म added to the forms of the present tense gives them the sense of the past. ५ Companions. सह चरति इति–सहचारिणा. ६ Intent on friendship. स्नेह पर यथा तौ. ७. Diverting themselves in all places. ८ Then once on a time. ९ तत्राधिष्ठाने तस्मिन्नधिष्ठाने In that place. १० A temple. ११ A great festival in consequence of a pilgrimage. ( Pilgrimages are periodically held at certain shrines by the devotees. ) १२ तस्मिन् In that ( festival ). १३ Crowded by dancers ( नट ), actors ( नर्तक ) and wandering bards ( चारण ). १४ Filled with people come from various places. This and the preceding नट &c. are adjectives of तत्र = तस्मिन् महोत्सवे. १५ Companions, friends. १६ Mounted on a female elephant. १७ Endowed with or possessed of all good signs. १८ Attended upon or surrounded by chamberlains and eunuchs. १९ Hurt by poison. २० As if smitten by an evil star. २१ The arrows of cupid.

वस्थमवलोक्य रथकारस्तद्दुःखदुःखित आप्तपुरुषैस्तं समुत्क्षिप्य स्वगृहमानानयत । तत्र च विविधैः शीतोपचारैश्चिकित्सकोपदिष्टैर्मन्त्रवादिभिरुपचार्यमाणश्चिरात्कथंचित्सचेतनो बभूव । ततो रथकारेण पृष्टः । भो मित्र किमेवं त्वमकस्माद्विचेतनो जातः । तत्कथ्यतामात्मस्वरूपम् । स आह । वयस्य यद्येवं तच्छृणु मे रहस्यं येन सर्वामात्मवेदनां ते वदामि । यदि त्वं मां सुहृदं मन्यसे ततः काष्ठप्रदानेन प्रसादः क्रियताम् । क्षम्यतां यत्किंचित्प्रणयातिरेकादयुक्तं तव मयानुष्ठितम् । सोऽपि तदाकर्ण्य बाष्पपिहितनयनः सगद्गदमुवाच । वयस्य तद्दुःखकारणं किं तव । तद्वद येन प्रतीकारः क्रियते यदि शक्यते कर्तुम् । उक्तं च यतः ।

औषधार्थसुमन्त्राणां बुद्धेश्चैव महात्मनाम् ।
असाध्यं नास्ति लोकेऽत्र यद्ब्रह्माण्डस्य मध्यगम् ॥ २०३ ॥

तदेषां चतुर्णां यदि साध्यं भविष्यति तदहं साधयिष्यामि । कौलिक आह । वयस्य एतेषामन्येषामपि सहस्रशः उपायानामसाध्यं तन्मम दुःखम् । तस्मान्मम मरणे मा कालक्षेपं कुरु । रथकार

१ In that condition. सा अवस्था यस्य. ब. २ Afflicted by his affliction तद्दुःखेन = तस्य दुःखेन ३ By relatives. ४ Cold remedies or appliances ५ Prescribed by physicians ६ By persons versed in *spells* and incantations. ७ Being attended to. Pre. P. of चर caus. with उप Pass. ८ Regained consciousness. ९ Opposed to सचेतन. विचेतन विगता चेतना यस्य. ब. १० Real state or condition. ११ Secret. १२ So that. १३ By the giving or offering of wood for the funeral pile १४ Through the excess of love. १५ With the eyes filled (lit. covered or obstructed) with tears. १६ Remedy against, retaliation. १७ Whatever is in the egg of Brahma, that is, universe, is not incurable by medicines, wealth, good spells or charms and also by the talent of the magnanimous. १८ If it can be accomplished by these four means. १९ Of thousands of remedies. २० Incurable. २१ Do not make any delay (make no delay) in my death, i.e., do not put off my death by talking of remedies which will be of no avail.

आह । भो मित्र यद्यप्यसाध्यं[1] तथापि निवेदय येनाहमपि तदसाध्यं मत्वा त्वया सह वह्नौ प्रविशामि । न क्षणमपि त्वद्वियोगं सहिष्ये । एष मे निश्चयः । कौलिक आह । वयस्य यासौ राजकन्या करेणुकारूढा तत्रोत्सवे दृष्टा तस्या दर्शनानन्तरं मकरध्वजेन[2] ममेयमवस्था विहिता तन्न शक्नोमि तद्वेदनां[3] सोढुम् । रथकारोऽपि सस्मितमिदमाह । वयस्य दिष्ट्या[4] यद्येवं तर्हि सिद्धं नः प्रयोजनम् । तदद्यैव तया सह संगमः क्रियतामिति । कौलिक आह । वय० । यत्र कन्यान्तःपुरे[5] वायुं[6] मुक्त्वान्यस्य प्रवेशो नास्ति तत्र[7] रक्षापुरुषाधिष्ठिते[8] कथं मम तया सह संगमः । तत्किं मामसत्यवचनेन[9] विडम्बयसि[10] । रथकार आह । मित्र पश्य मे बुद्धिप्रभावम्[11] । एवमभिधाय तत्क्षणात्कीलसंचारिणं[12] वैनतेयं[13] सबाहुयुगलं[14] चिरजार्जुनवृक्षदारुणा[15] शङ्खचक्रगदापद्मान्वितं[16] सकिरीटकौस्तुभमघटयत्[17][18] । ततस्तस्मिन्[19] कौलिकं समारोप्य विष्णुचिह्नैश्चिह्नितं[20] कृत्वा कीलसंचरणविज्ञानं च[21] दर्शयित्वा प्रोवाच । वयस्य अनेन विष्णुरूपेण गत्वा कन्यान्तःपुरे निशीथे[22] राजकन्यामेकाकिनीं सप्त-

---

१ Thinking it to be incurable after I hear of it. २ Cupid. ३ That agony. तद्वेदना = ता वेदना. ४ Hail, oh joy! ५ In the female apartment assigned to princesses. ६ Without wind (lit. leaving off wind). This use of the absolutives for prepositions is very frequent in the Panchatantras. ७ यत्र-तत्र = यस्मिन्-तस्मिन् in that—where &c. ८ Inhabited by guards (रक्षापुरुष). ९ By false or impracticable assurance. १० Mock. ११ Power. १२ Moving on a pin or wedge. कीलके संचरतीति तम्. १३ Garuda, the son of Vinata. वैनतेय = विनताया अपत्यं पुमान् a patronymic derivative. Garuda is the vehicle of Vishnu. १४ Having two arms. १५ With the timber of an old अर्जुन tree. चिरजस्य अर्जुनवृक्षस्य = चिरजार्जुनवृक्षस्य चिरजः = चिरात् जातः पं० त. १६ Furnished with a conch, wheel, mace and lotus—these four are the weapons which Vishnu is represented as wielding. १७ Accompanied with a diadem and the jewel कौस्तुभ hanging down his neck. सकिरीटकौस्तुभं किरीटकौस्तुभाभ्यां सहितं ब. १८ Constructed. १९ In that artificial eagle. कृत्रिमगरुडे. २० Marked with the signs of Vishnu तृ. त. २१ Having taught him the skill of putting the machine in motion. २२ At midnight.

भूमिकप्रासादप्रान्तगतां मुग्धस्वभावां त्वां वासुदेवं मन्यमानां स्वकीयमिथ्यावक्रो[3]क्तिभी रञ्जयित्वा वात्स्यायनो[4]क्तविधिना भज । कौलिकोऽपि तदाकर्ण्य वासुदेवरूपी रहस्तदा गत्वा तत्र तामाह । राजपुत्रि सुप्ता किंवा जागर्षि । अहं तव कृते समुद्रात्सा[6]नुरागो लक्ष्मीं विहायैवागतः । तत्क्रियतां मया सह संगम इति । सापि गरुडारूढं चतुर्भुजं सायुधं कौस्तुभोपेतमवलोक्य सविस्मया शयनादुत्थाय प्रोवाच । भगवन् अहं मानुषी कीटिकाशुचिर्भगवांस्त्रै[10]लोक्यपावनो वन्दनीयश्च । तत्कथमेत[11]द्युज्यते । कौलिक आह । सु[12]भगे सत्यमभिहितं भवत्या परं किंतु राधा नाम मे भार्या गोपकु[13]लप्रसूता प्रथममासीत् । [14]सा त्वमत्रावतीर्णा । तेनाहमायातः । इत्युक्ता सा प्राह । भगवन्यद्येवं तन्मे तातं प्रार्थय । सोऽप्यवि[15]कल्प्य तुभ्यं मां प्रयच्छति । कौलिक आह । सुभगे नाहं दर्श[16]नपथं मानुषाणां गच्छामि किं पुनरालापकरणम् । त्वं गान्धर्वे[18]ण विवाहेनात्मानं प्रयच्छ नो [19]चेच्छापं दत्त्वा सान्वयं ते पितरं भस्मसात्करिष्यामीति । एवम-

१ Living on the top of the palace seven stories high. सप्तभूमिकप्रासाद. क. २ Of an artless disposition. ब. ३ By false and equivocal terms or expressions. ४ According to the mode prescribed by *Vátsyáyana*, an author on कामशास्त्र. ५ In the disguise of Vásudeva. ६ Full of love ७ चतुर्भुज = चत्वारो भुजा यस्य तं. ब. ८ With weapons. ९ A worm, a term used contemptuously for a human being १० Purifying the three worlds. ११ एतत्, *viz.*, the fact that I should have intercourse with you. १२ Oh fortunate or beautiful one १३ Born in the family of cowherds. १४ That same ( you ) have come down or descended to the world of mortals as the daughter of a king. १५ Having assigned me to you. १६ To the range of sight. १७ Much less do I talk with them ( mortals ). For this use of किंपुनः in the double sense of " how much more or how much less " See Guide to S. C. १८ According to the form of marriage called Gândharva, in which the only condition necessary is the mutual consent of the bride-groom and the bride. १९ If not, otherwise. २० Together with the family, family and all.

भिधाय गरुडादवतार्य । सव्ये [1]पाणौ कृत्वा तां सभयां स-
लज्जां वेपमानां शय्यायामनयत्ततश्च [2]रात्रिशेषं यावद्वा-
त्स्यायनोक्तविधिना [3]निषेव्य प्रत्यूषेलक्षितो जगाम । [4]एवं तां त-
स्य नित्यं सेवमानस्य कालो याति । अथ [5]कदाचित्कञ्चुकिनस्तस्या
अधरोष्ठप्रवाल[6]खण्डनं दृष्ट्वा मिथः प्रोचुः । अहो पश्यतास्या [7]राज-
कन्यायाः पुरुषोपभुक्ताया इव शरीरावयवाः संभाव्यन्ते । तत्कथमयं
सुरक्षितेप्यस्मिन्गृह एवंविधो [8]व्यवहारः । [9]तद्राज्ञे निवेदयामः ।
एवं निश्चित्य सर्वे [10]समेत्य राजानं प्रोचुः । देव वयं न विद्मः परं
सुरक्षितेपि कन्यान्तःपुरे कश्चित्प्रविशति तद्देवः प्रमाणमिति । तच्छ्रु-
त्वा राजातीव [11]व्याकुलितचित्तो देवीं [12]रहःस्थां प्रोवाच । देवि ज्ञायतां
किमेते कञ्चुकिनो वदन्ति । [13]तस्य कृतान्तः कुपितो येनैतदेवं क्रिय-
ते । देव्यपि तदाकर्ण्य व्याकुलीभूता सत्वरं गत्वा तां [14]खण्डिताधरां
नखविकर्तितशरीरा[15]वयवामपश्यत । आह च । [16]आः [17]पापे [18]कुलक-
लङ्किनि किमेवं शील[19]खण्डनं कृतम । कोयं [20]कृतान्तावलोकित-

---

१ Having taken hold of her with the right hand. २ During the remaining portion of the night. ३ Understand here तां as the object of निषेव्य having enjoyed. ४ Some time passed while he was thus enjoying her. ५ Then once on a time. ६ Having seen a sign of biting on her coral-like lower-lip अधरोष्ठ इव प्रवालं. क. ७ The limbs of the body of the princess appear as if she were being enjoyed by a man. ८ Affair. ९ So let us inform the king of this निविद governs the dative of the person to whom some thing is told. The present indicative is often used for the Imperative mood. So निवेदयाम = निवेदयाम. १० Having come together. ११ Greatly distressed at heart. १२ When she was in private. १३ The god of death is angry with him, by whom this is done, that is, he who has spoiled the virginity of the princess deserves no less a punishment than death. १४ Whose lower-lip was bitten. १५ Whose limbs were scratched with nails. नखैर्विकर्तिताः शरीरावयवाः यस्याः ताम्. ब. १६ आः an interjection implying anger or displeasure. १७ Oh sinful one. १८ A disgrace to, or stain on, the family. १९ The destruction of virtue. २० Looked at, or marked as a victim by death.

स्त्वत्सकाशमभ्येति[१] तत्कथयतोऽप्येवंगतेपि । सत्यम् । तच्छ्रुत्वा सापि अपाधोमुखी[२] सकलं विष्णुरूपकौलिकवृत्तान्तं[३] निवेदयामास । सापि तच्छ्रुत्वा प्रहसितवदना[४] पुलकाङ्कितसर्वाङ्गी[५] सत्वरं गत्वा राजानमूचे । देव दिष्ट्या वर्धसे[६] । नित्यमेव निशीथे भगवान्नारायणः कन्यकापार्श्वेऽभ्येति[७] । तेन गान्धर्वविवाहेन सा विवाहिता[८] । तदद्य त्वया मया च रात्रौ वातायनगताभ्यां[९] निशीथे द्रष्टव्यो यतो न स मानुषैः सहालापं करोति । तच्छ्रुत्वा हर्षितस्य राज्ञस्तद्दिनं वर्षशतप्रायमिव[१०] कथंचिज्जगाम[११] । ततस्तु रात्रौ निभृतो[१२] भूत्वा राज्ञीसहितो राजा वातायनस्थो[१३] गगणासक्तदृष्टिर्यावत्तिष्ठति[१४] तावद्गरुडारूढं तं शङ्खचक्रगदापद्महस्तं[१५] यथोक्तचिह्नाङ्कितं[१६] व्योम्नोऽवतरन्तमपश्यत्[१७] । ततः सुधापूरप्लावितमिवात्मानं[१८] मन्यमानस्तामुवाच । प्रिये नास्त्यन्यो धन्यतरो[१९] मत्तस्त्वत्तश्च यत्प्रसूतिं नारायणो भजते[२०] । तत्सिद्धाः सर्वेऽस्माकं मनोरथाः । अधुना जामातृप्रभावेण सर्वां वसुमती[२१] वशे[२२] भविष्यति । एवं निश्चित्य सर्वैः सीमाधिपैः[२३] सह मर्यादाव्यतिक्रम[२४]-

---

१ Though such is the state of things; when your crime is so evident. २ Who had hung down her head through shame. अपगतं अधः मुखं यस्याः सा. ब. ३ The account of the weaver disguised as Vishnu. ४ With a smiling countenance. ५ Whose whole body was covered with horripilation. पुलकैः अंकितं सर्वं अंगं यस्याः सा. ब. ६ You are happy; this expression is equal to the English: I congratulate you (on &c.). ७ पार्श्वेऽभ्येति = पार्श्वमभ्येति comes near. ८ विवाहिता = ऊढा. ९ Seated in the window. १० As if equal in length to a hundred years, that is, very long. ११ With great difficulty, any how. १२ Being concealed, that is, concealing himself. १३ Standing at the window. वातायने तिष्ठतीति. १४ With the eyes directed towards the sky. १५ Having in his hands शंख &c. १६ Furnished with the signs mentioned before. १७ From the sky. १८ As if deluged with the flood of nectar. १९ More blessed. २० Since Nārāyana enjoys our offspring. २१ The earth. २२ Will come in my power. २३ Border-kings. २४ The encroachment on the boundaries.

मकरोत् । ते च तं मर्यादाव्यतिक्रमेण वर्तमानमालोक्य सर्वे समेत्य[2] तेन सह विग्रहं[3] चक्रुः । अत्रान्तरे स राजा देवीमुखेन[4] तां दुहितरमुवाच । पुत्रि त्वयि दुहितरि स्थितायां[5] किमेवं युज्यते[6] यत्सर्वे पार्थिवा मया सह विग्रहं कुर्वन्ति । तत्संबोध्योऽयं[7] भर्ता त्वया यथा स मम शत्रून्व्यापादयति । अथ तया स कौलिको रात्रौ सविनयमभिहितः । भगवन् त्वयि जामातरि स्थिते मम तातो यच्छत्रुभिः परिभूयते[8] तन्न युक्तम् । तत्प्रसादं कृत्वा सर्वांस्तान्व्यापादय । कौलिक आह । सुभगे कियन्मात्रास्त्वेते[9] तव पितुः शत्रवः । तद्विश्वस्ता भव क्षणेनापि सुदर्शनचक्रेण[10] सर्वांस्तिलशः[11] खण्डयिष्यामि । अथ गच्छता कालेन समस्तदेशः शत्रुभिर्व्याप्तः[12] ।[13] अस्य केवलं स राजा प्राकारशेषः कृतः । तथापि वासुदेवरूपधरं[14] कौलिकमजानन्राजा नित्यमेव विशेषतः कर्पूरागुरुकस्तूरिकादिपरिमलविशेषान्[15] नानाप्रकारवस्त्रभक्ष्यपेयांश्च[16] प्रेषयन्दुहितृमुखेन[17] तमूचे । भगवन्प्रभाते नूनं[18] स्थानभङ्गो[19] भविष्यति यतो यवसेन्धनक्षयः[20] संजातस्तथा सर्वोऽपि जनः

---

१ Living २ Having joined together ३ Declared war with him. ४ Through the mouth of, through the Queen. ५ You being our daughter. ६ What, is it proper that &c. ७ You should request your husband so that &c. ८ Is despised, defeated. ९ How great a measure, of what account, are they? कियन्मात्रा = कियन्ती मात्रा येषां ते. ब. १० With the disc called सुदर्शन. ११ Shall cut them to pieces as small as (तिल) sesame, that is, shall cut them into small pieces. १२ Occupied १३ The king had only the fortress out of the kingdom left to him अस्य &c. देशस्य. प्राकारशेषः = प्राकार एव शेषः यस्य. ब. १४ Not knowing that it was the कौलिक who appeared in the disguise of Vasudeva. १५ Fragrant things such as camphor, aloe, musk and others. कर्पूरागुरुकस्तूरिका आदयः येषां तान् (परिमलविशेषान्) ब. १६ Consisting also of various sorts of garments, eatables and drinkables. This is also ब. and an adjective of कर्पूर...विशेषान्. नाना प्रकाराणि वस्त्रभक्ष्यपेयानि च येषु तान्. १७ प्रेषयन् (Sending) having for its object कर्पूर.. विशेषान्; and विशेषतः: especially, as special gifts on the present occasion. १८ Indeed or certainly in the morning. १९ We shall lose our place (fortress). २० The supply of fodder and fuel is over or has fallen short.

प्रहारैर्जर्जरितदेहः[१] संवृत्तो योद्धुमक्षमः[२] प्रचुरो[३] मृतश्च । तदेवं ज्ञात्वात्र[४] काले यदुचितं भवति तद्विधेयमिति[५] । तच्छ्रुत्वा कौलिकोऽप्यचिन्तयत्स्थानभङ्गे जाते ममानया सह वियोगो भविष्यति । तस्माद्गरुडमारुह्य सायुधमात्मानमाकाशे[६] दर्शयामि । कदाचिन्मां वासुदेवं मन्यमानास्ते माशङ्का[७] राज्ञो योद्धृभिर्हन्यन्ते । उक्तं च ।

[९]निर्विषेणापि सर्पेण कर्तव्या महती फणा ।
विषं भवतु मा भूद्वा फटाटोपो भयंकरः ॥ २०४ ॥

अथवा मम स्थानार्थं[१०] उद्यतस्य मृत्युर्भवति तथापि[११] सुन्दरतरम्[१२] । उक्तं च ।

[१३]गवामर्थे ब्राह्मणार्थे स्वाम्यर्थे स्त्रीकृतेऽथवा ।
स्थानार्थे यस्त्यजेत्प्राणांस्तस्य लोकाः सनातनाः ॥ २०५ ॥

एवं निश्चित्य प्रत्यूषे दन्तधावनं[१४] विधाय तामूचे । सुभगे समस्तैः[१५] शत्रुभिर्हतैरन्नं पानं चास्वादयिष्यामि । किं बहुना । त्वयापि सह

---

१ Exhausted in body by the wounds (received in defending the fort ). २ Unable. ३ And many are killed or have fallen. ४ अत्रकाले = अस्मिन्काले. ५ Let that which is suitable to the occasion be done. ६ Let me show myself armed in the sky. The present Ind. used for the Imperative. ७ Full of fear (thinking me to be Vāsudeva himself ). ८ The king's soldiers. ९ Even that snake who has no poison should spread out his hood fully, there may or may not be poison, but the very spreading of the hood is terrible to look at. The verse as seen elsewhere is—निर्विषेणापि कर्तव्या सर्पेण महती फटा । विषं भवतु वा मास्तु फटाटोपो भयंकरः ॥ In the verse in the book the two words फणा and फटा are, therefore, synonymous. १० Ready for or intent on saving the place of the king. ११ अथवा तथापि = यदि तथा. If, then. १२ More pleasant, much better, ( than, of course, the destruction of the enemies by the king's soldiers ) १३ The good or happy world is the eternal place of residence of him who will sacrifice his life for the sake of cows, Brāhmans, the master, a woman, and a place of residence. १४ Washing the teeth. १५ When all the enemies are killed. This may be considered as an instance of the Instrumental absolute in Sanskrit, and may be rendered by समस्तेषु शत्रुषु हतेषु.

संग्रामं तैः करिष्यामि । परं वाच्यस्त्वया निजपिता यत्त्वया प्रभाते सर्वसैन्येन सह नगरान्निष्क्रम्य योद्धव्यमहं चाकाशस्थस्तान्निस्तेजसः करिष्यामि पश्चात्सुखेन भवता हन्तव्याः । यदि पुनरहं तान्स्वयमेव सूदयिष्यामि तदेषां पापात्मनां वैकुण्ठीया गतिः स्यात् । तस्मात्ते तथा कर्तव्या यथा पलायन्तो हन्यमानाः स्वर्गं न गच्छन्ति । सापि तदाकर्ण्य पितुः समीपं गत्वा सर्वं वृत्तान्तं न्यवेदयत । राजापि तस्या वाक्यं श्रद्दधानः प्रत्यूषे समुत्थाय सुसंनद्धसैन्यो युद्धार्थं निर्जगाम । कौलिकोऽपि मरणे कृतनिश्चयश्चापपाणिर्गगनगतिर्गरुडारूढो युद्धाय प्रस्थितः । अत्रान्तरे भगवता नारायणेनातीतानागतवर्तमानवेदिना स्मृतमात्रो वैनतेयः संप्राप्तो विहस्य प्रोक्तः । भो गरुत्मन् जानासि त्वं यन्मम रूपेण कौलिको दारुमयगरुडे समारूढो राजकन्यां कामयते । सोऽब्रवीत् । देव सर्वं ज्ञायते तच्चेष्टितं मे । तत्किं कुर्मः सांप्रतम् । श्रीभगवानाह । अद्य कौलिको मरणे कृतनिश्चयो विहितनियमो युद्धार्थे विनिर्गतः । स नूनं प्रधानक्षत्रियशराहतो

१ Should be told or informed. Pot. Passive P. of वच् 2 P. २ Should fight. ३ Remaining in the sky. ४ Destitute of energy. निर्गतं तेजः येषां ते. ब. ५ With ease, easily. ६ Kill or destroy. ७ Evil-minded, or wicked. ८ Will go to, or obtain Paradise or the world of Vishnu for being killed while fighting with the enemy. ९ They should be so dealt with or treated. १० Being killed while running from the battle-field. पलायन्त: पलायमाना: Pre. P. of पलाय (परा+इ) to run — here used in the Parasmaipada. ११ With his army well armed or equipped. सुष्ठु सन्नद्धं सैन्यं यस्य सः ब. १२ Determined to die in battle. स. त. १३ Bow in hand. चापं पाणौ यस्य. १४ Moving in the sky. गगने गतिर्यस्य. ब. १५ Knowing the past, the future (अनागत) and the present. This is an द्वन्द्व Comp. (अतीतं च अनागतं च वर्तमानं च) अतीतानागतवर्तमानानि वेत्तीति. १६ Being only remembered, as soon as he was remembered. १७ Arrived. P. P. of आप् with सम् and प्र. १८ His tricks or movements. १९ Now, for the present. २० One who has taken upon himself a vow. विहितः नियमः येन. ब. २१ Being struck with an arrow by a powerful warrior—प्रधान, chief, and hence, powerful, brave.

निधनमेष्यति । तस्मिन्हते[2] सर्वो जनो त्वां द्रक्ष्यति यत्सम्भूतक्षत्रियैर्मिलित्वा[3] वासुदेवो गरुडश्च निपातितः । ततः परं लोक आवयोः पूजां न करिष्यति । ततस्त्वं द्रुततरं तत्र दारुमयगरुडे संक्रमणं[4] कुरु । अहमपि कौलिकशरीरे आवेशं[5] करिष्यामि येन स शत्रून्व्यापादयति । ततश्च शत्रुवधादावयोर्माहात्म्यवृद्धिः[6] स्यात् । अथ तथेति[7] प्रतिपन्ने श्रीभगवन्नारायणस्तच्छरीरे संक्रमणमकरोत । ततो भगवन्माहात्म्येन[8] गगनस्थः स कौलिकः शङ्खचक्रगदाचापचिह्नितः क्षणादेव[9] लीलयैव[10] सर्वानपि प्रधानक्षत्रियान्निस्तेजसश्चकार । ततस्तेन राज्ञा स्वसैन्यपरिवृतेन[11] जिता निहताश्च ते सर्वेपि शत्रवः । जातश्च लोकमध्ये[12] प्रवादो यथानेन विष्णुजामातृप्रभावेण[13] सर्वे शत्रवो निहता इति । कौलिकोपि तान्हतान्दृष्ट्वा प्रमुदितमना[14] गगणादवतीर्णः[15] [16]सच्यावद्राजामात्यपौरलोकास्तं नगरवास्तव्यं कौलिकं पश्यन्ति ततः पृष्टः किमेतदिति । ततः सोपि मूलादारभ्य[17] सर्वं प्राग्वृत्तान्तं[18] न्यवेदयत् । ततश्च [19]कौलिकसाहसानुरञ्जितमनसा शत्रुवधादवाप्ततेजसा राज्ञा सा राजकन्या सकलजनप्रत्यक्षं[20] विवाहविधिना तस्मै समर्पिता देशश्च [21]प्रदत्तः । कौलि-

---

१ Death. २ He being killed, when he is killed. ३ Having come together, conjointly. ४ Make an entrance into, or enter into. ५ Entrance. ६ Our greatness or importance will be heightened. ७ That being agreed to (by Garuda). ८ By the greatness of the god. भगवत्. महात्म्येन. ष. त. ९ In a moment. १० With ease, easily. Cf. सुखेन. ११ All the enemies *without a single exception* (अपि) were defeated and slain. १२ There was a talk among people, it was openly talked. १३ By the power of his son-in-law, Vishnu. विष्णुरेव जामाता. क. १४ Delighted at heart. १५ Descended. Here the sentence ought to end. १६ When the king, the ministers and citizens saw that he was a weaver living in the town. नगरवास्तव्यं=नगरे वास्तव्यं यस्य तम्. ब. १७ From the beginning. १८ Previous account. १९ The king whose mind was diverted by the adventurous disposition of the weaver, and who had obtained new vigour by the destruction of the enemies. २० In the presence of all people. २१ And a country was assigned to him for his sustenance.

कोपि तया सार्धं पञ्चप्रकारं जीवलोकसारं विषयसुखमनुभवन्कालं निनाय ॥

अतस्तूच्यते सुप्रयुक्तस्य दम्भस्येति ।

करटक आह । अथैवंविधे व्यतिकरे किं कार्यमावाभ्याम् । दमनक आह । एवंविधेपि समये मम बुद्धिस्फुरणं भविष्यति येन प्रभोः संजीवकं विश्लेषयिष्यामि । उक्तं च ।

एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥ २०६ ॥

करटक आह । यद्यपि ते बुद्धिप्रागल्भ्यं तथापि त्वं पिङ्गलकात्संजीवकं वियोजयितुमसमर्थ एव । दमनक आह । भ्रातः असमर्थोपि समर्थ एव । उक्तं च ।

उपायेन हि यत्कुर्यात्तन्न शक्यं पराक्रमैः ।
काक्या कनकसूत्रेण कृष्णसर्पो निपातितः ॥ २०७ ॥

करटक आह । कथमेतत् । सोब्रवीत् ।

## ॥ कथा ६ ॥

कस्मिंश्चित्प्रदेशे महातरौ वायसदंपती प्रतिवसतः स्म । अथ तयोः

---

१ The essence of this worldly existence. २ The happiness derived from sensual enjoyments. ३ Therefore, it is said &c. ४ Such being the state of things. ५ The flashing forth of the intellect. ६ Separate, alienate. 2nd Fut. of caus. of श्लिष् 4 P. with वि. ७ The arrow discharged by an archer may or may not hit a man, but the talent used (lit. hit. forth) by a talented man, will hit even a kingdom together with the king. ८ The skill or proficiency of talent. ९ The same as विश्लेषयिष्यामि 6 above. १० That which one can accomplish by remedies, is not possible to do ( कर्तुम् ) by valour; a female crow destroyed a black-serpent by means of a gold cord or string (used as an ornament). Another reading for उपायेन हि यत्कुर्यात् is उपायेन हि यच्छक्यम्. ११ A crow.

प्रसवकाले[१] वृक्षविवरान्निष्क्रम्य[२] कृष्णसर्पः सदैव तदपत्यानि[३] भक्षयति । ततस्तौ निर्वेदादन्यवृक्षमूलनिवासिनं[५] प्रियसुहृदं[६] शृगालं गत्वोचतुः । भद्र किमेवंविधे[७] संजाते आवयोः कर्तव्यं भवति । एष तावद्दुष्टात्मा कृष्णसर्पो विवरान्निर्गत्यावयोर्बालकान्भक्षयत्येव । तत्कथ्यतां तद्रक्षार्थं[८] कश्चिदुपायः ।

[९]यस्य क्षेत्रं नदीतीरे भार्या च परसंगता ।
ससर्पे च गृहे वासः कथं स्यात्तस्य निर्वृतिः ॥ २०८ ॥

अन्यच्चास्माकमपि तत्रस्थानां[१०] प्रतिदिनं प्राणसंशयः[११] । स आह । नात्र विषये विषादः[१२] कार्यः । नूनं स लुब्धो नोपायमन्तरेण[१३] वध्यः स्यात् ।

[१४]उपायेन जयो यादृग्रिपोस्तादृङ्न हेतिभिः ।
उपायज्ञोऽल्पकायोपि न शूरैः परिभूयते ॥ २०९ ॥

---

१ At the time of delivery or bringing forth young ones. २ A hollow. ३ Their young ones. तयोः अपत्यानि. Here तयोः stands for the masculine and feminine. It is an एकशेषद्वंद्व. ४ Through sorrow or dejection of spirits. ५ Residing at the root of another tree. ६ Dear friend. ७ Such being the case; when we are thus circumstanced. ८ For their protection, for saving them. तेषां रक्षार्थम्. ष. त. ९ How can he, whose abode is situated on the banks of a river, whose wife is attached to another ( paramour ), and who lives in a house inhabited by snakes, have happiness or ease? परसंगता. त. त. १० While living there. ११ Danger to life. संशय meaning doubt, fear &c. is of frequent occurrence in Sanskrit. १२ Sorrow, दुःख. १३ In this case. अत्र = अस्मिन्. Without a remedy. अन्तरेण and अन्तरा govern the accusative. See Guide. १४ That much victory, which is obtained against an enemy by making use of a remedy is not obtained by means of swords ( हेतिभिः ); one who knows a remedy is not defeated by brave persons though he be small in body or bulk. Here यादृक् ought to have been followed by its usual correlative तादृक्, or in place of यादृक् one would expect यावान् to correspond with तावान्. उपायं जानातीति उपायज्ञः. उप.; अल्पकायः ब.

तथा च । भक्षयित्वा[1] बहून्मत्स्यानुत्तमाधममध्यमान् ।
अतिलौल्याद्बकः कश्चिन्मृतः कर्कटकग्रहात् ॥ २१० ॥
तावूचतुः । कथमेतत् । सोऽब्रवीत् ।

## ॥ कथा ७ ॥

अस्ति कस्मिंश्चित्प्रदेशे नानाजलचरसनाथं[2] सरः । तत्र च कृताश्रयो[3] बक एको वृद्धभावमुपागतो[4] मत्स्यान्व्यापादयितुमसमर्थः । ततश्च क्षुत्क्षामकण्ठः सरस्तीर उपविष्टो मुक्ताफलसदृशैरश्रुप्रवाहैर्धरातलमभिषिञ्चन्[5]रुरोद । एकः कुलीरको[6] नानाजलचरसमेतः[7] समेत्य[8] तस्य दुःखेन दुःखितः[9] सादरमिदमूचे । माम[10] किमद्य त्वयाहारवृत्तिर्नानुष्ठीयते[11] । केवलमश्रुपूर्णनेत्राभ्यां सनिःश्वासेन स्थीयते[12] । स आह । वत्स सत्यमुपलक्षितं[13] भवता । मया हि मत्स्यादनं प्रति परमवैराग्यतया[14] सांप्रतं प्रायोपवेशनं[15] कृतं तेनाहं[16] समीपागतानपि मत्स्यान्न भक्षयामि । कुलीरकस्तच्छ्रुत्वा प्राह । किं तद्वैराग्यकारणम् । स प्राह । वत्स अहमस्मिन्सरसि जातो[17] वृद्धिं गतश्च । तन्मयैतच्छ्रुतं यद्द्वादशवार्षि[18]-

---

१ Having devoured various sorts of fishes, *viz*, the best, the lowest and the middling, a crane perished through excess of greed, being seized by a crab or by reason of the seizure ( ग्रह ) by a crab. २ Full of various water animals. नानाजलचरैः सनाथं त. त. ३ Residing, dwelling. कृतः आश्रयः येन. ब. ४ Reduced to the state of old age, become old. ५ Wetting the ground with tears falling down in drops resembling pearls. ६ A crab. ७ Accompanied with various acquatic animals ८ Having come together Here सम seems to have no propriety of meaning as समेत expresses the sense of it. ९ Grieved at his grief, sympathizing with him in his grief. १० A term of address meaning uncle. ११ The action of taking food, eating &c. १२ Remain sighing. निःश्वासेन सहितेन. ब १३ Marked; observed. १४ Great absence of desire as regards the devouring of fish. परमवैराग्यता abstract noun from परमविराग. परमः विरागः यस्य. ब. १५ Abstaining from food and awaiting the approach of death. १६ For that reason. १७ Born and brought up. १८ Lasting for a period of 12 years; an adjective from द्वादशवर्ष by the taddhita affix ठक्.

क्यनावृष्टिः संपद्यते लग्ना । कुलीरक आह । कस्मात्तच्छ्रुतम् । बक आह । दैवज्ञमुखात् । यतः शनैश्चरो रोहिणीशकटं भित्त्वा भौमश्च शुक्रश्च प्रयास्यति । उक्तं च वराहमिहिरेण ।

यदि रोहिण्याः शकटं भिनत्ति रविनन्दनो गगणवीथ्याम् ।
द्वादश वर्षाणि तदा न हि वर्षति वासवो भूमौ ॥ २११ ॥

तथा च । प्राजापत्ये शकटे भिन्ने कृत्वेव पातकं वसुधा ।
भस्मास्थिशकलकीर्णा कापालमिव व्रतं धत्ते ॥ २१२ ॥

तथा च । रोहिणीशकटमर्कनन्दनश्चेद्भिनत्ति रुधिरोथवा शशी ।
किं वदामि तदनिष्टसागरे संक्षयं जगदशेषमुपैति ॥२१३॥

तदेतन्सरः स्वल्पतोयं वर्तते । शीघ्रं शोषं यास्यति । अस्मिञ्शुष्के

---

१ Absence of rain ; drought. २ Is close ( लग्ना ) at hand, is closely impending. ३ From an astrologer or fortune-teller. ४ The planet शनि, Saturn. ५ The constellation Rohiṇī in the form of a cart. ६ The planets Mars ( मंगल ) and Venus. ७ A very famous Indian astronomer, who flourished in the 6th century A. D. ८ If the *son of Ravi* ( Saturn ) crosses the cart of Rohiṇī in his passage through the sky, Indra does not send down rain on the earth for twelve years. ( भिनत्ति lit. breaks through. ) ९ When the cart of Prajâpati ( the cart of Rohiṇī, of which Prajâpati is the deity ) is passed through ( भिन्न ), the Earth being covered with ashes and pieces of bones, as if it has committed some sin, assumes the vow of a skull-bearer ( a devotee of S'iva ). The earth is here compared to a कापालिक by reason of its being strewed with the ashes and bones of the persons who have died in consequence of the drought. A कापालिक is one who covers his body with ashes and carries in his hand a human skull to carry alms in as an atonement for his sin. १० If either the son of the sun ( अर्क ) that is, Saturn, Mars or the Moon passes through the cart of Rohiṇī, what should I say with respect to the evils that arise therefrom ? The whole earth goes to destruction or is destroyed. तदनिष्टसागरे = तस्यानिष्टस्य सागरे. with regard to the numberless evils that arise. Here तत् refers to the fact of the Saturn passing through &c. अशेषं = नास्ति शेषं यस्य. ब. Entire, whole. ११ Is a, Bah. Comp. १२ Will be dried up. १३ When it is dried up.

# A POPULAR EDITION

OF THE

# FIRST TANTRA

OF

## VISHNUS'ARMAN.

( Containing a full Glossary and a literal translation of the verses occurring in the Text. )

BY

**MAHADEVA SHIVARÂMA ÂPTE, B. A.,**

1ST ASSISTANT MASTER, HIGH SCHOOL, SATARA.



PUBLISHED BY HARI NARAYAN GOKHALE,

Manager Arya-Bhushana Press,

POONA.







1894.

यैः सहाहं वृद्धिं गतः सदैव क्रीडितश्चैते सर्वे तोयाभावान्नाशं यास्यन्ति । तदेषां वियोगं द्रष्टुमहमसमर्थः । तेनैतत्प्रायोपवेशनं कृतम् । सांप्रतं सर्वेषां स्वल्पजलाशयानां जलचरा गुरुजलाशयेषु स्वस्वजनैर्नीयन्ते केचिच्च मकरगोधाशिशुमारजलहस्तिप्रभृतयः स्वयमेव गच्छन्ति । अत्र पुनः सरसि ये जलचरास्ते निश्चिन्ताः सन्ति तेनाहं विशेषाद्रोदिमि यद्बीजशेषमात्रमप्यत्र[11] नोद्धरिष्यति । ततः स तदाकर्ण्यान्येषामपि जलचराणां तत्तस्य वचनं निवेदयामास । अथ ते सर्वे भयत्रस्तमनसो मत्स्यकच्छप[12]प्रभृतयस्तमभ्युपेत्य पप्रच्छुः । माम अस्ति कश्चिदुपायो येनास्माकं रक्षा भवति । बक आह । अस्त्यस्य जलाशयस्य नातिदूरे[13] प्रभूतजलसनाथं सरः पद्मिनीखण्ड[14]मण्डितं यच्चतुर्विंशत्यापि वर्षाणामवृष्ट्या न शोषमेति । तद्यदि मम पृष्ठं कश्चिदारोहति तदहं तं तत्र नयामि । अथ ते तत्र[16] विश्वासमापन्नास्तात मातुल भ्रातरिति ब्रुवाणा अहं पूर्वमहं पूर्वमिति समन्तात्परितस्थुः । सोऽपि दुष्टाशयः क्रमेण तान्पृष्ठमारोप्य जलाशयस्य नातिदूरे शिलां समासाद्य[20] तस्यामाक्षिप्य स्वेच्छया भक्षयित्वा भूयोऽपि

---

१ Played, sported, P. P. of क्रीड् used actively. २ Through the absence or want of water. ३ The water-animals living in small ponds or reservoirs of water. स्वल्पाश्च ते जलाशयाश्च. क. ४ By their respective relatives. ५ A large water-lizard. ६ The Gangetic porpoise. ७ Water-elephant. ८ अत्र सरसि = In this lake. ९ Free from anxiety or care. १० For that reason, viz., that expressed by यत् following. ११ For not even a seed of them will remain here or will be left here. उद्धरिष्यति should be taken in the passive sense = उद्धरिष्यते. बीजशेष-बीजमेव शेषः. क. १२ The fish, tortoise and others. मत्स्यकच्छपौ प्रभृती येषां ते. ब. १३ Not far from this lake. १४ Adorned with a multitude of lotus-plants. १५ Absence of rain, drought. १६ तत्र = तस्मिन् &c. Those who put confidence in him; in whom was engendered confidence about him. १७ Stood around him saying I first, I first, that is, take me first, take me first. १८ Of evil or wicked intention. दुष्ट आशयः यस्य. १९ Having reached. २० Having dashed.

जलाशयं समासाद्य जलचरगणान्मिथ्यावार्तासंदेशकैर्[१]मनांसि रञ्जयन्नित्यमिवा[२]हारवृत्तिमकरोत् । अन्यस्मिन्दिने[३] स कुलीरकेणोक्तः । माम मया सह ते प्रथमः स्नेहसंभाषः[४] संजातः । तत्किं मां परित्यज्यान्यान्नयसि । तस्मादद्य मे प्राणत्राणं[५] कुरु । तदाकर्ण्य सोपि दुष्टाशयश्चिन्तितवान् । निर्विण्णोहं[६] मत्स्यमांसादनेन । तदद्यैनं कुलीरकं व्यञ्जनस्थाने[७] करोमि । इति विचिन्त्य तं पृष्ठे समारोप्य तां वध्यशिलाम्[८]उद्दिश्य[९] प्रस्थितः । कुलीरकोपि दूरादेवास्थिपर्वतं[१०] शिलाश्रयम्[११]अवलोक्य मत्स्यास्थीनि परिज्ञाय तमपृच्छत् । माम कियद्दूरे[१२] स जलाशयः । मदीयभारेणातिश्रान्तस्[१३]त्वं तत्कथय । सोपि मन्दधीर्[१४]जलचरोयमिति मत्वा स्थले न प्रभवतीति[१५] सस्मितमिदमाह । कुलीरक कुतोन्यो जलाशयः । मम प्राणयात्रेयम्[१६] । तस्मात्स्मर्यतामात्मनोभीष्टदेवता[१७] । त्वामप्यस्यां शिलायां निक्षिप्य भक्षयिष्यामि । इत्युक्तवति तस्मिन्स्ववदनदंशद्वयेन[१८] मृणालनालधवलायां[१९] मृदुग्रीवायां गृहीतो[२०] मृतश्च । अथ स तां बकग्रीवां समादाय शनैःशनैस्तज्जला-

---

१ By giving them ( जलचर ) false account of things. २ Like the usual one. ३ One day ( it does not mean exactly the next day). ४ Friendly discourse. ५ The saving of life. प्राणत्राणं कुरु Save my life. ६ I am disgusted with eating the flesh of fishes. ७ Use ( him ) as condiment or sauce. ८ The stone of execution, that is, the stone on which he dashed his prey before eating it. वध्य has no force of the passive here. ९ Towards. १० A heap of bones. ११ Lying on the stone. शिला आश्रय यस्य तं ( अस्थिपर्वतं ) ब. १२ How far, how remote. १३ Greatly fatigued. १४ Dull-headed, of dull intellect. मन्दा धीर्यस्य. ब. १५ Has no power on land; is powerless on land. Here understand मत्वा after प्रभवतीति. १६ Subsistence, maintenance. १७ Let your desired or tutelary deity be remembered; make yourself ready for death by offering your last prayers to your deity. १८ With two teeth of his mouth. स्व here refers to the कुलीरक. १९ As white as the stalk of a lotus. मृणालनाल इव धवला. क. २० Was seized and perished. Here there is a violation of the rule of Syntax, viz., the subject of the Loc. absolute ( construction ) cannot be the subject of the principal sentence.

शयमुपससाद[1] । ततः सर्वैरेव जलचरैः पृष्टः । भोः कुलीरक किंनि-मित्तस्त्वं[2] पश्चादायातः[3] । [4]कुशलकारणं तिष्ठति । स मातुलोऽपि नायातः । [5]तत्किं चिरयसि । वयं सर्वे सोत्सुकाः कृतक्षणास्तिष्ठामः[6] । एवं तैरभिहिते कुलीरकोऽपि विहस्योवाच । मूर्खाः सर्वे जलचरास्तेन मिथ्यावादिना[7] वञ्चयित्वा नातिदूरे शिलातले प्रक्षिप्य भक्षिताः । तन्मयायुःशेषतया[8] तस्य विश्वासघातकस्याभिप्रायं ज्ञात्वा ग्रीवेयमानीता । [9]तदलं संभ्रमेण । अधुना सर्वजलचराणां क्षेमं[10] भविष्यति ॥

अतोऽहं ब्रवीमि भक्षयित्वा बहून्मत्स्यानिति ।

वायस आह । भद्र तत्कथय कथं स दुष्टसर्पो वधमुपैष्यति[11] । शृगाल आह । गच्छतु भवान्किंचिन्नगरं राजाधिष्ठानम्[12] । तत्र कस्यापि धनिनो राजामात्यादेः[13] प्रमादिनः कनकसूत्रं[14] हारं[15] वा गृहीत्वा तत्कोटरे[16] प्रक्षिप येन सर्पस्तद्ग्रहणेन[17] वध्यते । अथ तत्क्षणात्काकः काकी च तदाकर्ण्यात्मेच्छया[18] उत्पतितौ[19] । ततश्च काकी किंचित्सरः

---

१ Reached, approached that pond. Here तज्जलाशय cannot be a Genitive Tatpurusha, but it is कर्मधारय त जलाशयम २ With what object in view, for what purpose? किंनिमित्तं यस्य स:-किंनिमित्तः. ३ Come back, returned. ४ Is there any cause in your return that concerns our welfare? Here किम् is to be understood after तिष्ठति. ५ Why do you then delay telling us what motive has induced you to come back ६ We are all very anxious and waiting impatiently for the right moment. सोत्सुका and कृतक्षणाः ब. ७ Liar. ८ As I am yet destined to live by reason of the remainder of my life. ९ Then enough of haste or rashness अलं (enough) governs generally the Instrumental and sometimes the absolutive or Infinitive of purpose, e. g. अलमन्यथा गृहीत्वा &c. १० Safety, welfare ११ Go to or near; meet with. १२ The place of residence of a sovereign or his capital. १३ Of a king, minister &c. who may be careless. राजामात्यादेः-राजामात्यौ आदौ यस्य. ब. १४ A string or garland of gold. १५ Wreath, garland. १६ तस्य कोटरे in his hole. १७ For having taken it away. १८ Of their own will, of their own accord. १९ Flew up.

प्राप्य यावत्पश्यति तावत्तन्मध्ये कस्यचिद्राज्ञोन्तःपुरं जलासन्नं न्यस्त-कनकसूत्रं मुक्तमुक्ताहारवस्त्राभरणं जलक्रीडां कुरुते । अथ सा वा-यसी कनकसूत्रमेकमादाय स्वगृहाभिमुखं प्रतस्थे । ततश्च कञ्चुकि-नो वर्षधराश्च तन्नीयमानमुपलक्ष्य गृहीतलगुडाः सत्वरमनुययुः । काक्यपि सर्पकोटरे तत्कनकसूत्रं प्रक्षिप्य सुदूरमवस्थिता । अथ या-वद्राजपुरुषास्तं वृक्षमारुह्य तत्कोटरमवलोकयन्ति तावत्कृष्णसर्पः प्रसारितभोगस्तिष्ठति । ततस्तं लगुडप्रहारेण हत्वा कनकसूत्रमादाय यथाभिलषितं स्थानं गताः । वायसदंपती अपि ततः परं सुखेन वसतः ॥ अतोहं ब्रवीम्युपायेन हि यत्कुर्यादिति । •

तन्न किंचिदिह बुद्धिमतामसाध्यमस्ति । उक्तं च ।

यस्य बुद्धिर्बलं तस्य निर्बुद्धेस्तु कुतो बलम् ।
वने सिंहो मदोन्मत्तः शशकेन निपातितः ॥ २१४ ॥

करटक आह । कथमेतत् । स आह ।

## ॥ कथा ८ ॥

कस्मिंश्चिद्वने भासुरको नाम सिंहः प्रतिवसति स्म । अथासौ

---

१ As soon as; no sooner than. २ The ladies of the female apartments collectively. ३ Near the water. जलस्य आसन्नम्. ष. त. ४ Who had put off or laid aside their gold strings ५ Who had taken off their persons, their pearl-necklaces, clothing and decorations. This and the preceding are both Bah compounds. ६ Towards her own residence स्वगृहस्याभिमुखं यथा स्यात्तथा. अव्यय ७ The eunuch attendants on the harem. ८ Who had taken cudgels in their hands. गृहीता लगुडा यैस्ते ब. ९ It may either mean तस्य कोटरे = सर्पस्य कोटरे or तत् कोटर may mean-that hollow. तत् being a demonstrative pronoun. १० Who had spread out his hood. प्रसारितः भोगः येन. ब. ११ To the place desired ( by them ). १२ He who has talent, has power; whence can one, void of talent, have power? A lion intoxicated with pride in a forest was destroyed by a hare. यस्य बुद्धिर्बलं तस्य, Cf. the English " knowledge is power."

ीर्यातिरेकान्नित्यमेवानेकान्मृगशशकादीन्व्यापादयन्नास्ते स्म । अथान्येद्युस्तद्वनजाः सर्वे सारङ्गवराहमहिषशशकादयो मिलित्वा तमभ्युपेत्य प्रोचुः । स्वामिन् किमनेन सकलमृगवधेन नित्यमेव यतस्तवैकेनापि मृगेण तृप्तिर्भवति । तत्क्रियतामस्माभिः सह समयधर्मः । अद्यप्रभृति तवात्रोपविष्टस्य जातिक्रमेण प्रतिदिनमेको मृगो भक्षार्थं समेष्यति । एवं कृते तव तावत्प्राणयात्रा क्लेशं विनापि भविष्यत्यस्माकं च पुनः सर्वोच्छेदनं न स्यात् । तदेष राजधर्मोऽनुष्ठीयताम् । उक्तं च ।

शनैः शनैश्च यो राज्यमुपभुङ्क्ते यथाबलम् ।
रसायनमिव प्राज्ञः स पुष्टिं परमां व्रजेत् ॥ २१५ ॥

विधिना मन्त्रयुक्तेन रूक्षापि मथितापि च ।
प्रयच्छति फलं भूमिररणीव हुताशनम् ॥ २१६ ॥

---

१ Through the excess of strength. २ Deer, hare and others. मृगशशकांः आदौ येषां तान् (प्राणिनः) ब. ३ Did not cease killing, *i. e.*, went on killing, continuously killed. ४ Born *in his* (lion's) *forest* or *in that forest*. In the first case तद्वन is a ष. त., while in the other it is a क. ५ Deer, boar, buffalo, hare and others. सारङ्गवराहमहिषशशकाः आदयः येषां ते. ब. ६ What is the good of this destruction of all beasts. ७ A contract, a bargain, a treaty. ८ While you are sitting here, that is, without your moving from your place. ९ In the order of our kinds. १० Every day. दिनं दिनं = प्रतिदिनम्. अव्य. ११ First, as regards yourself. १२ Without any trouble at all. १३ But further, as regards ourselves. १४ The total destruction or extirpation of all. सर्वेषामुच्छेदनम्. १५ That wise man, who gradually enjoys his kingdom according to his strength, will attain to great prosperity, as a person attains nourishment of the body by taking *a medicine that prolongs life* (रसायन = रस and अयन). १६ A piece of land though sterile, yields fruit when it is cultivated according to the proper mode (मंत्रयुक्तेन विधिना), as the *Arani* (two pieces of wood used in kindling the sacred fire), though rough, gives fire (हुताशन) when it is handled or churned according to the rite accompanied with the Vedic hymn.

[1]प्रजानां पालनं शस्यं स्वर्गकोशस्य वर्धनम् ।
पीडनं धर्मनाशाय पापायायशसे स्थितम् ॥ २१७ ॥
[2]गोपालेन प्रजाधेनोर्वित्तदुग्धं शनैः शनैः ।
पालनात्पोषणाद्ग्राह्यं न्याय्यां वृत्तिं समाचरेत् ॥ २१८ ॥
[3]अजामिव प्रजां मोहाद्यो हन्यात्पृथिवीपतिः ।
तस्यैका जायते तृप्तिर्न द्वितीया कथंचन ॥ २१९ ॥
[4]फलार्थी नृपतिर्लोकान्पालयेद्यत्नमास्थितः ।
दानमानादितोयेन मालाकारोऽङ्कुरानिव ॥ २२० ॥
[5]नृपदीपो धनस्नेहं प्रजाभ्यः संहरन्नपि ।
अन्तरस्थैर्गुणैः शुभ्रैर्लक्ष्यते नैव केनचित् ॥ २२१ ॥

१ The protection of the subjects is praiseworthy and increases *the chances of obtaining heaven* ( स्वर्ग ) and also the treasure while their oppression tends to the destruction of religion, and to sin and infamy. स्वर्गकोश may be taken as a कर्मधारय as स्वर्ग एव कोश which means treasure in the form of heavenly bliss. स्थितम् with the dative meaning leads to, results in; Cf. तां स्वर्गाद् यायात् in verse 2. २ A cowherd ( गोरूपेण पालेन a king ) in the shape of a king should take the milk ( wealth ) from the cows ( of subjects ) gradually by protecting and nourishing them ( cows, subjects ) and thus he should have recourse to a just or righteous path. प्रजाधेनु and वित्तदुग्ध are रू, a king being compared to a cowherd. ३ That king who through folly kills his subjects like a sheep, has satisfaction only once and never for a second time. हन्यात् oppress to death, kill. एका तृप्तिः one gratification, *viz.*, when killed. ४ A king wishing to get fruit ( revenue ) from the subjects, should protect them with great efforts by giving them gifts and honor, as a gardener who wishes to get fruit from the shoots of trees should tend them by giving them manure, water and prunning them with great exertions. Here a king is compared to a gardener. यत्नमास्थितः standing on efforts, making efforts. ५ A king, like a lamp, though he takes revenue from the subjects as the lamp does oil, is never observed to do so by reason of his bright intrinsic merits, as the lamp attracting oil by the wicks ( गुणैः ) is not seen to do so as it does imperceptibly. शुभ्र white, unsullied.

[1]यथा गौर्दुह्यते काले पाल्यते च तथा प्रजाः।
सिच्यते चीयते चैव लता पुष्पफलप्रदा ॥ २२२ ॥
[2]यथा बीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिरक्षितः।
फलप्रदो भवेत्काले तद्वल्लोकः सुरक्षितः ॥ २२३ ॥
[3]हिरण्यधान्यरत्नानि यानानि विविधानि च।
तथान्यदपि यत्किंचित्प्रजाभ्यः स्यान्महीपतेः ॥ २२४ ॥
[4]लोकानुग्रहकर्तारः प्रवर्धन्ते नरेश्वराः।
लोकानां संक्षयाच्चैव क्षयं यान्ति न संशयः ॥ २२५ ॥

अथ तेषां तदाकर्ण्य भासुरक आह। अहो सत्यमभिहितं भवद्भिः परं यदि ममाप्युपविष्टस्यात्र नित्यमेव नैकः श्वापदः समागमिष्यति तन्नूनं सर्वानपि भक्षयिष्यामि। अथ ते तथैव प्रतिज्ञाय निर्वृतिभाजस्तत्रैव वने निर्भयाः पर्यटन्ति। एकश्च प्रतिदिनं क्रमेण याति। वृद्धो वा वैराग्ययुक्तो वा शोकग्रस्तो वा पुत्रकलत्रनाशभीतो

१ As a cow is milked and fed at the proper time, so are the subjects; a creeper which yields flowers and fruits is watered and gathered ( fruits are gathered from it ). The meaning is, that if the king wishes to derive revenue from the subjects, he must protect them, as a cow is fed and a creeper is watered. पुष्पं च फलं च पुष्पफले ते प्रददाति इति. उप. २ As a seed-germ though small, when protected with efforts, yields fruit in time, so do subjects ( give fruit in the shape of tribute ) when well protected. तद्वल्लोकः supply after it फलप्रदः भवेत्. ३ Gold, corn and jewels and various kinds of vehicles and so also everything else, is obtained by the king from the subjects. Supply स्यात् or भवेत् after यत्किंचित्. ४ *The Lords of men* ( kings ) who show favour to the people, prosper, and there is no doubt that by the destruction of the people they ( themselves ) are destroyed. ५ Enjoying happiness. भाज् ( from भज 1 A.) has this sense, as a latter part of compounds. ६ तत्रैव = तस्मिन्नेव. ७ Free from fear. निर्गतं भयं येभ्य. ते निर्भयाः. ब. ८ Having absence of desire as regards the objects of this world. ९ Engrossed in grief. १० Afraid of the destruction of son and wife.

वा तेषां मध्यात्तस्याहारार्थं मध्याह्नसमय उपतिष्ठते । अथ कदाचि-ज्जातिक्रमाच्छशकस्य वारः[१] समायातः । स समस्तमृगैः प्रेरितोऽनि-च्छन्नपि[३] मन्दं मन्दं[४] गत्वा तस्य[५] वधोपायं चिन्तयन्वेलातिक्रमं[६] कृत्वा व्याकुलितहृदयो यावद्गच्छति तावन्मार्गे गच्छता कूपः संदृष्टः । या-वत्कूपोपरि[७] याति तावत्कूपमध्य आत्मनः प्रतिबिम्बं[८] ददर्श । तेन हृदये चिन्तितं यद्भव्य[९] उपायोऽस्ति । अहं भासुरकं प्रकोप्य[१०] स्वबु-द्ध्यास्मिन्कूपे पातयिष्यामि । अथासौ दिनशेषे[११] भासुरकसमीपं प्राप्तः । सिंहोऽपि वेलातिक्रमेण क्षुत्क्षामकण्ठः[१२] कोपाविष्टः सृक्कणी[१३] परिलेलिहद्व्यचिन्तयत् । अहो प्रातराहाराय[१४] निःसत्त्वं[१५] वनं मया कर्त-व्यम् । एवं चिन्तयतस्तस्य[१६] शशको मन्दं मन्दं गत्वा प्रणम्य तस्याग्रे स्थितः । अथ तं प्रज्वलितात्मा[१७] भासुरको भर्त्सयन्नाह[१८] । रे शश-काधम[१९] एकं तावत्त्वं लघुः प्राप्तोऽपरं[२०] वेलातिक्रमेण तदस्मादपराधात्[२१] त्वां निपात्य प्रातः सकलान्यपि मृगकुलान्युच्छेदयिष्यामि[२२] । अथ श-शकः सविनयं प्रोवाच । स्वामिन्नापराधो मम न च सत्त्वानाम् ।

---

१ According to the order of the kinds of animals already fixed. २ Turn; time. ३ Though unwilling, against his will. ४ Slowly and slowly. ५ Of the lion (सिंहस्य). ६ Having transgressed the proper time of going there, *i. e.*, having gone late. ७ As soon as he went over to the mouth of the well. ८ Reflection, image. ९ Excellent; right. १० Having excited the anger of (abs. of the caus. of कुप् 4 P. with प्र). ११ At the conclusion or end of the day. ष. त. १२ With his throat parched with hunger. क्षुधा क्षामः कण्ठः यस्य. ब. १३ Licking the corners of the mouth. It is a sign of one's being very hungry. १४ For (my) food in the morning. १५ Void of all animals (सत्त्व). निर्गतानि सत्त्वानि यस्मात्. ब. १६ While he was thus thinking. (Gen. absolute construction) १७ With the soul inflamed or burning with anger. प्रज्वलितः आत्मा यस्य सः. ब. १८ Abusing, scolding. १९ The worst of hares. २० Firstly and secondly, in the first place and in the second place. २१ For this fault. The ablative shows cause or reason. २२ The tribes or families of the beasts.

तच्छ्रूयतां कारणम् । सिंह आह । सत्वरं निवेदय यावद्दंष्ट्रान्तर्गतो[1] न भवसीति । शशक आह । समस्तमृगैरद्य स्वामिन्[2]जातिक्रमेण मम लघुतरस्य प्रस्तावं विज्ञाय ततोहं पञ्चशशकैः[3] समं प्रेषितः । ततश्चाहमागच्छन्नन्तराले[4] महता केनचिद्विपरेण सिंहेन विवरान्निर्गत्याभिहितः । रे क्व प्रस्थिता यूयम । अभीष्टदेवतां स्मरत । ततो मयाभिहितम् । वयं स्वामिनो भासुरकस्य सिंहस्य सकाश आहारार्थं समयधर्मेण गच्छामः । ततस्तेनाभिहितम् । यद्येवं तर्हि मदीयमेतद्वनं[5] मया सह समयधर्मेण सर्वैः श्वापदैर्वर्तितव्यम । चौररूपी[6] स भासुरकः । अथ यदि सोत्र राजा ततो विश्वासस्थाने चतुरः शशकानत्र धृत्वा[7] तमाहूय द्रुततरमागच्छ येन द्वयोर्मध्याद्यः कश्चित्पराक्रमेण राजा भविष्यति स सर्वानेतान्भक्षयिष्यतीति । अतोहं तेनादिष्टः[8] स्वामिसकाशमागतः । एतद्वेलाव्यतिक्रमकारणम । तदत्र स्वामी प्रमाणम । तच्छ्रुत्वा भासुरक आह । भद्र यद्येवं तर्हि सत्वरं दर्शय मे तं चौरसिंहं[9] येनाहं मृगकोपं तस्योपरि क्षिप्त्वा[10] स्वस्थो भवामि । उक्तं च ।

"भूमिर्मित्रं हिरण्यं च विग्रहस्य फलत्रयम ।
नास्त्येकमपि यद्येषां न तं कुर्यात्कथंचन ॥ २२६ ॥[11]

---

१ Before you are placed between my jaws २ Turn, time of. ३ I was sent with four hares *i. e.* I was the fifth of those that were sent. ४ In the middle, on the way. ५ Mine, belonging to me. ६ Of a thievish disposition or nature. ७ Having kept here four of the hares as hostages. विश्वासस्थान lit. place of confidence, object of security. ८ Ordered, commanded. ९ That pretender lion, that imposter of a lion. १० Having thrown, or directed the anger I entertain for the beasts against him. ११ The ( acquisition of ) land, friends and gold, these are the three fruits of waging war ( with others ); when there is not even one of these to be obtained, one should not declare hostility ( with others ).

¹यत्र न स्यात्फलं भूरि यत्र च स्यात्पराभवः ।
न तत्र मतिमान्युद्धं समुत्पाद्य समाचरेत् ॥ २२७ ॥

शशक आह । स्वामिन्सत्यमिदम् । स्वभूमिहेतोः² परिभवाच्च युध्यन्ते क्षत्रियाः । परं स दुर्गाश्रयः³ । दुर्गान्निष्क्रम्य वयं तेन विष्कम्भिताः⁴ । ततो दुर्गगतो⁵ दुःसाध्यो⁶ भवति रिपुः । उक्तं च ।

⁷न गजानां सहस्रेण न च लक्षेण वाजिनाम् ।
यत्कृत्यं सिध्यति राज्ञां दुर्गेणैकेन विग्रहे ॥ २२८ ॥

⁸शतमेकोपि संधत्ते प्राकारस्थो धनुर्धरः ।
तस्माद्दुर्गं प्रशंसन्ति नीतिशास्त्रविचक्षणाः ॥ २२९ ॥

⁹पुरा गुरोः समादेशाद्धिरण्यकशिपोर्भयात् ।
शक्रेण विहितं दुर्गं प्रभावाद्विश्वकर्मणः ॥ २३० ॥

¹⁰तेनापि च वरो दत्तो यस्य दुर्गं स भूपतिः ।
विजयी स्यात्ततो भूमौ दुर्गाणि स्युः सहस्रशः ॥ २३१ ॥

---

१ A wise man should not create a quarrel and wage war, when the fruit to be obtained from it is not considerable, and where defeat is certain. समुत्पाद्य (abs. of the caus. of पद with समुद्). २ Warriors, brave persons. ३ One whose place of residence or shelter, is a fortress. दुर्गः आश्रयः यस्य. ब. ४ Obstructed, stopped. P. P. of स्कंभ् 1 A. 5, 9 P. with वि. ५ Gone into a fort, residing in a fort. दुर्गं गतः or दुर्गे गतः स or द्वि. त. ६ Difficult to be subdued or killed. ७ That thing which kings can accomplish in war by means of a fort alone, cannot be accomplished by a thousand elephants and by one hundred thousand horses. ८ Even a single archer is a match for a hundred when he is in a fort, therefore, those who are proficient in politics, praise a fort very highly. शतं-शतं धनुर्धरान्. नीति...णाः स. त. ९ Formerly Indra had a fort built by the power of Visvakarman (the builder of Gods) at the advice of his preceptor (Brihaspati) and through the fear of Hiranya Kasipu (a demon killed by Vishnu in his fourth incarnation, *viz.*, that of नृसिंह). १० He (Indra) also gave a boon to the effect that the king, who has a fort, will be victorious; therefore, there are forts on the earth by thousands. Here स्युः = संति.

[1]दंष्ट्राविरहितो नागो मदहीनो यथा गजः ।
सर्वेषां जायते वश्यो दुर्गहीनस्तथा नृपः ॥ २३२ ॥

तच्छ्रुत्वा भासुरक आह । भद्र दुर्गस्थमपि दर्शय तं चौरसिंहं येन व्यापादयामि । उक्तं च ।

[2]जातमात्रं न यः शत्रुं रोगं च प्रशमं नयेत् ।
महाबलोऽपि तेनैव वृद्धिं प्राप्य स हन्यते ॥ २३३ ॥

तथा च । [3]उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता ।
समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च ॥ २३४ ॥

अपि च । [4]उपेक्षितः क्षीणबलोऽपि शत्रुः
प्रमाददोषात्पुरुषैर्मदान्धैः ।
साध्योऽपि भूत्वा प्रथमं ततोऽसा-
वसाध्यतां व्याधिरिव प्रयाति ॥ २३५ ॥

तथा च । [5]आत्मनः शक्तिमुद्वीक्ष्य मानोत्साहं च यो व्रजेत् ।
शत्रून्हन्ति स एकोऽपि क्षत्रियान्भार्गवो यथा ॥ २३६ ॥

---

१ As a cobra without fangs and an elephant without intoxication, are subdued, so is a king without a fort conquered by all. २ He, who does not extinguish an enemy and a disease as soon as they are born or produced, will, though very powerful, be killed by that enemy or that disease, when he or it grows strong. महाबल = महद्बलं यस्य स. ब. ३ A rising enemy should never be neglected by him who wishes his own welfare; for, he ( the enemy ) and a disease when about to increase, are said to be equal by *those whose opinion carries weight* ( शिष्ट ) आम्नात P. P. of म्ना with आ. वर्त्स्यन्तौ Future P. of वृत् which is optionally Paras. and takes no इ. ४ An enemy though weak and thus likely to be subdued in the beginning, becomes afterwards hard to overcome, like a disease, when he is neglected by men blinded with pride through the fault of carelessness or indifference. क्षीणबल. ब., प्रमाददोष-प्रमाद एव दोष . क , मदेन अंधा . त. ब. ५ He who will go to battle after rightly estimating his own strength and energy produced by self-reliance, will, though alone, kill his enemies, as *Bhārgava* ( the descendant of the sage भृगु and the seventh incarnation of Vishnu ) destroyed the Kshatriyas.

शशक आह । अस्त्येतत्तथापि तस्य सामर्थ्यमविदित्वा न युज्यते गन्तुम् । उक्तं च ।

अविदित्वात्मनः शक्तिं परस्य च समुत्सुकः
गच्छन्नभिमुखो याति नाशं वह्नौ पतङ्गवत् ॥ २३७ ॥

यो बलात्प्रोन्नतं याति निहन्तुं सबलोप्यरिः ।
विमदः स निवर्तेत शीर्णदन्तो गजो यथा ॥ २३८ ॥

भासुरक आह । यद्यप्येवं तथापि त्वं दर्शय तं चौरसिंहं यथा व्यापादयामि । शशक आह । यद्येवं तर्ह्यागच्छतु स्वामी । एवमुक्त्वाग्रे व्यवस्थितः । ततश्च तेनागच्छता यः कूपो दृष्टोभूत्तमेव कूपमासाद्य भासुरकमाह । स्वामिन्कस्ते प्रतापं सोढुं समर्थः । त्वां दृष्ट्वा दूरतोपि चौरसिंहः प्रविष्टः स्वं दुर्गम् । तदागच्छ यथा दर्शयामीति । भासुरक आह । दर्शय मे दुर्गम् । तदनु दर्शितस्तेन कूपः । ततः सोपि मूर्खः सिंहः कूपमध्य आत्मप्रतिबिम्बं जलमध्यगतं दृष्ट्वा सिंहनादं मुमोच । ततः प्रतिशब्देन कूपमध्याद्द्विगुणतरो नादः समुत्थितः । अथ तेन तं शत्रुं मत्वात्मानं तस्योपरि प्रक्षिप्य प्राणाः परित्यक्ताः । शशकोपि हृष्टमनाः सर्वमृगानानन्द्य तैः सह प्रशस्यमानो यथासुखं तत्र वने निवसति स्म ॥

---

१ This is so, that is, what you say is just so still, &c. २ He who without knowing his own strength and also that of the enemy, *faces him with eagerness* ( समुत्सुक अभिमुखो गच्छन् ), meets with destruction, as a moth does in fire. ३ That enemy, though powerful, who goes forward to kill one who is elated with strength, will come back divested of his pride like an elephant who has his tusks broken in fight. ४ So that, in order that. ५ Lord, your majesty. ६ Went forward, proceeded forward. ७ Who is able to endure your might? ८ Thereupon. ९ Fallen into water. १० Roared ( lit. uttered a lion's roar. ) ११ Echo, reverberation. १२ Roar twice as loud as that made by the lion. १३ Arose. १४ Throwing himself upon him. १५ Having pleased or gladdened. ( abs. of नन्द् with आ. ) १६ Being extolled by them. Pre. P. of शंस् with प्र 1 P. १७ As it pleased him, at his pleasure.

अतोहं ब्रवीमि यस्य बुद्धिर्बलं तस्येति ।

तद्यदि भवान्कथयति तत्रैव गत्वा तयोः स्वबुद्धिप्रभावेण मैत्रीभेदं[1] करोमि । करटक आह । भद्र यद्येवं तर्हि गच्छ । शिवास्ते पन्थानः सन्तु । यथाभिप्रेतमनुष्ठीयताम्[2] । अथ दमनकः संजीवकवियुक्तं[3] पिङ्गलकमवलोक्य तत्रान्तरे[4] प्रणम्याग्रे समुपविष्टः । पिङ्गलकोपि तमाह । भोः कस्माच्चिराद्दृश्यसे । दमनक आह । न किंचिद्देवपादानामस्माभिः प्रयोजनं[5] तेन[6] नागच्छामः । तथापि राजप्रयोजनविनाशमवलोक्य[7] संदह्यमानहृदयो[8] व्याकुलतया स्वयमेवाभ्यागतो[9] वक्तुम् । उक्तं च ।

[10]शुभं वा यदि वा पापं द्वेष्यं वा यदि वा प्रियम् ।
अपृष्टस्तस्य तद्ब्रूयाद्यस्य नेच्छेत्पराभवम् ॥ २३९ ॥

अथ तस्य साभिप्रायं[11] वचनमाकर्ण्य पिङ्गलक आह । किं वक्तुमना भवान् । तत्कथ्यतां यत्कथनीयमस्ति । स प्राह । देव[12] संजीवको युष्मत्पादानामुपरि द्रोहबुद्धिरिति । विश्वासगतस्य मम विजने[13] इदमाह । दमनक दृष्टास्य पिङ्गलकस्य सारासारता[14] । तदहमेन हत्वा सकलमपि मृगाधिपत्यं[15] त्वत्साचिव्यसमन्वितं[16] करिष्यामि । पिङ्गलकोपि

---

१ A breach of friendship २ Do as you like, please yourself ३ Separated from Sanjivaka तृ. त ४ In that interval, *viz.*, during which the bull was absent तस्मिन्नन्तरे. ५ Your Majesty (lit. your Majesty's feet) has no need of us. ६ For that reason. ७ The destruction or ruin of the king's interest ८ Burning (with grief) at heart सन्दह्यमानं हृदयं यस्य ब. ९ Of myself, of my own accord. १० Even when not asked, one should say that to him whose defeat he does not wish, whether it be good or evil, or whether hateful or pleasing. तस्य ब्रूयात् = तस्मै ब्रू. Gen. for Dat. ११ Full of some motive, underlying some purpose. अभिप्रायेण सह. ब. १२ Sanjivaka entertains evil designs against your Majesty. द्रोहबुद्धि-द्रोहाय बुद्धिर्यस्य. ब. १३ In private, in secret. १४ Strength (सारता) and weakness (असारता) or strong and weak points. १५ The sovereignty over all the beasts. १६ Furnished or accompanied with your ministership. त्वत्सा...तं = तव साचिव्येन समन्वितं. तृ. त. The meaning is I shall be the lord of the forest, and make you my chief minister of state.

तद्वज्रसारप्रहारसदृशं दारुणं तद्वचः समाकर्ण्य मोहमुपगतो न किंचिदूचे । स दमनकोपि तस्य तमाकारमालोक्य चिन्तितवान् । अयं तावत्संजीवकनिबद्धरागस्तन्नूनमनेन मन्त्रिणा राजा विनाशमवाप्स्यतीति । उक्तं च ।

[६]एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं यदा
तं मोहाच्छ्रयते मदः स च मदाद्दास्येन निर्विद्यते ।
निर्विण्णस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा
स्वातन्त्र्यान्नृपतेः स राज्यमथवा प्राणानपि च्यावयेत् ॥२४०

किमत्र युक्तमिति । पिङ्गलकोपि चेतनां समासाद्य कथमपि तमाह । दमनक संजीवकस्तावत्प्राणसमो भृत्यः स कथं ममोपरि द्रोहबुद्धिं करोति । दमनक आह । देव भृत्योभृत्य[१०]इत्यनैकान्तिकमतत् । उक्तं च ।

[११]न सोस्ति पुरुषो राज्ञां यो न कामयते श्रियम् ।
अशक्ता एव सर्वत्र नरेन्द्रं पर्युपासते ॥ २४१ ॥

---

१ Resembling the strokes of adamant. त. त. २ Fainted, swooned. ३ Form, appearance. ४ One whose attachment is fixed on Sanjivaka. संजीवके निबद्धः रागः यस्य. ब. ५ With this as minister, with such a minister as this. ६ When a king makes any minister as the sole authority in the kingdom, pride takes possession of him (minister) through infatuation, and through pride he becomes disgusted with servitude, when dissatisfied, a desire for independence arises in his mind and through independence ( with the desire of getting independence ) he will deprive the king of his kingdom or even his life. हृदये पदं करोति makes a footing in the mind. स्व...हा-स्वतंत्रा स्पृहा. क. च्यावयेत Pot. of the caus. of च्यु 1 A. ७ Having recovered consciousness. ८ Any how, with great difficulty. ९ As to Sanjivaka, he is a servant as dear to me as life itself. १० The fact of his being a servant or non-servant, is not the question at issue, is not the point under discussion. एकान्तिक adj. conclusive and so अनैकान्तिक non-conclusive; proving nothing. ११ There is no man who does not desire wealth from kings; the weak alone wait upon a king every where. The words राज्ञां श्रियं should be construed together.

पिङ्गलक आह । भद्र तथापि मम तस्योपरि[1] चित्तवृत्तिर्न विकृतिं याति । अथवा साध्विदमुच्यते ।

[2] अनेकदोषदुष्टोपि कायः कस्य न वल्लभः ।
कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः ॥ २४२ ॥

दमनक आह । [3] अत एवायं दोषः । उक्तं च ।

[4] यस्मिन्नेवाधिकं चक्षुरारोपयति पार्थिवः ।
अकुलीनः कुलीनो वा स श्रियो भाजनं नरः ॥ २४३ ॥

अपरं केन[5] गुणविशेषेण स्वामी संजीवकं निर्गुण[6]कमपि निकटे[7] धारयति । [8] अथ यद्येवं चिन्तयसि महाकायोयमनेन रिपून्व्यापाद-यिष्यामि तदस्मान्न सिध्यति यतोयं शष्पभोजी देवपादानां शत्रवो मांसाशिनः । तद्रिपुसा[9]धनमस्य साहाय्येन न भवति । तस्मादेनं दूष-यित्वा[10] हन्य[11]तामिति । पिङ्गलक आह ।

---

१ My feelings ( चित्तवृत्ति ) towards him will undergo no change. २ To whom is not the body though spoiled by various defects dear ? He who is dear to one is ever so, though he commit faults or wrongs. अनेक...दुष्टः तृ. त. ३ For this very reason it is a fault; this state of your feelings towards him is the cause of his evil intentions towards you. ४ That man, whether low-born or nobly-born, for whom the king shows special regard, becomes the receptacle of wealth or prosperity. अधिकं चक्षुरारोपयति-pays more attention. भाजनं a pot. ५ For what special merit or quality ? गुणानां विशेष: ष. त. ६ Though destitute of merits or virtues. न सन्ति गुणा यस्य स. ब. ७ Holds near, keeps near. ८ If you think, " he is large-bodied, I shall kill my enemies at his hands, " that too will not be accomplished through him, since he is a grass-eater, while your Majesty's enemies are flesh eaters. ९ Subjugation, conquest. १० Having accused of crime. ( abs. of the caus. of दुष् 4 P. ) ११ One would expect अहि here, or अयं in place of एनं. It should, therefore, be either तस्मादयं दूषयित्वा हन्यताम् or तस्मादेनं दूषयित्वा जहि.

[1]उक्तो भवति यः पूर्वं गुणवानिति संसदि ।
तस्य दोषो न वक्तव्यः प्रतिज्ञाभङ्गभीरुणा ॥ २४४ ॥

अन्यच्च । मयास्य[2] तव[3] वचनेनाभयप्रदानं दत्तम् । तत्कथं स्वयमेव व्यापादयामि । सर्वथा संजीवकोयं सुहृदस्माकं न मे प्रति[4] कश्चिन्मन्युरिति । उक्तं च ।

[5]इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।
विषवृक्षोपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् ॥ २४५ ॥

[6]आदौ न वाप्रणयिनां प्रणयो विधेयो
दत्तोथवा प्रतिदिनं परिपोषणीयः ।
उत्क्षिप्य यत्क्षिपति तत्प्रकरोति लज्जां
भूमौ स्थितस्य पतनाद्भयमेव नास्ति ॥ २४६ ॥

[7]उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥ २४७ ॥

---

१ One who is afraid of violating his promise should not mention the fault of him whom he has once said to be meritorious in an assembly, *i e*, publicly. प्रतिज्ञा...णा. पं. त. प्रतिज्ञाभङ्गात् भीरुणा. २ अस्य = अमुं. ३ At your advice or recommendation. ४ I have no ill-feeling of any kind against him. ५ That demon has derived his glory *from this* ( from me ) and so he does not deserve to have his destruction from here ( me ); it is not proper for one to cut down even the tree of poison which one has reared with one's own hands. The construction of line 2 should be explained by saying that संवर्ध्य is the absolutive of the passive of वृध् with सम् छेत्तुमसांप्रतम् = न छेत्तव्यः. ६ In the first place no love at all should be shown to friends, but when once shown ( दत्त ), it should be increased every day; that a thing should be first elevated and then thrown down, produces shame, for one who is already *on the ground* ( low ) has no fear of a fall क्षिपति has for the subject कश्चिदपि. ७ What credit is to be given to the goodness of him who is good to those who have conferred obligations on him; he is said to be really a साधु ( saint ) by the good, who is really so ( good ) towards those who have injured him.

[1]तद्द्रोहबुद्धेरपि मयास्य विरुद्धं नाचरणीयम् । दमनक आह । स्वामिन्नैष धर्मो [2]यद्द्रोहबुद्धेरपि क्षम्यते । उक्तं च ।

[3]तुल्यार्थं तुल्यसामर्थ्यं मर्मज्ञं व्यवसायिनम् ।
अर्धराज्यहरं भृत्यं यो न हन्यात्स हन्यते ॥ २४८ ॥

अपरं त्वयास्य [4]सखित्वात्सर्वोऽपि राजधर्मः परित्यक्तो [5]राजधर्माभावात्सर्वोऽपि परिजनो विरक्तिं गतो यतः संजीवकः शष्पभोजी भवान्मांसादस्तव [6]प्रकृतयश्च । [7]यत्तवावध्यव्यवसायबाह्यं कुतस्तासां मांसाशनम् । [8]यत्तद्रहितास्तास्त्वां त्यक्त्वा यास्यन्ति । [9]तेनापि त्वं विनष्ट एव । अस्य संगत्या पुनस्ते न कदाचिदाखेटके [10]मतिर्भविष्यति । उक्तं च ।

[11]यादृशैः सेव्यते मर्त्यो यादृशांश्चैव सेवते ।
कदाचिन्नात्र संदेहस्तादृग्भवति पूरुषः ॥ २४९ ॥

---

१ I shall not or cannot act against him even though he conspire against my life. २ Forgiveness is shown to one who is ill disposed towards you. ३ He, who does not kill a servant whose wealth is equal, whose strength is equal ( to his own ), who knows the weak points, who is industrious and who deprives him of half his kingdom, is killed by him in his turn. तुल्यार्थं and तुल्यसामर्थ्यं are ब. and मर्मज्ञ and अर्धराज्यहर, उप. ४ In consequence of your friendship for him. ५ By reason of your not discharging your duties as a king ६ Flesh-eater. मांसं अत्ति मांसादः. ७ Here construe यत् ( मांसाशनं ) तव अवध्यव्यवसायबाह्यं तत् तासां ( प्रकृतीनां ) कुतः Whence can those subjects get flesh to eat, since it is foreign or contrary to your *determination of not killing* ( अवध्यव्यवसाय )? that is, since you are resolved upon not killing any beasts, how can the subjects eat flesh? ८ येन मांसाशनेन रहिताः.—when they have no flesh to eat. ९ In that case also. १० Will never have any inclination for hunting or chase. ११ There is no doubt that a man becomes exactly like those by whom he is served, and those whom he serves. After

तथा च । [1]संतप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ।
स्वातौ सागरशुक्तिसंपुटगतं तज्जायते मौक्तिकं
प्रायेणाधममध्यमोत्तमगुणः संवासतो जायते ॥२५०॥

तथा च । [2]असतां सङ्गदोषेण साधवो यान्ति विक्रियाम् ।
दुर्योधनप्रसङ्गेन भीष्मो गोहरणे गतः ॥ २५१ ॥

अत एव सन्तो नीचसङ्गं वर्जयन्ति । उक्तं च ।
[3]न ह्यविज्ञातशीलस्य प्रदातव्यः परिश्रयः ।
मत्कुणस्य च दोषेण हता मन्दविसर्पिणी ॥ २५२ ॥

पिङ्गलक आह । कथमेतत् । सोऽब्रवीत् ।

## ॥ कथा ९ ॥

अस्ति कस्यचिन्महीपतेर्मनोरमं[4] शयनस्थानम् । तत्र श्वेततरपटयुगलमध्यसंस्थिता मन्दविसर्पिणी यूका प्रतिवसति स्म । सा च तस्य

---

१ Even the name of the water that falls heated on iron is not known, or is not left; that very water, when it stands on the leaf of a lotus, shines with the lustre of pearls; when under the *Svâti Nakshatra* it falls into the cavities of sea-shells it is turned into pearls; generally the quality of being low, middling and best is acquired from association. नामापि may also mean-even a trace &c. In Bhartrihari's Nitisâtaka from which this verse is taken, the reading for the third line is rather different. स्वात्यां सागरशुक्तिमध्यपतितं सन्मौक्तिकं जायते. अधम...गुण.—अधमश्च, मध्यमश्च, उत्तमश्चासौ गुणः. क. २ As a consequence of the fault of associating with the wicked, the good undergo change of disposition, *Bhishma* went with the party sent for stealing the cows (of Virâta) by associating with Duryodhana. संगदोष = क. दुर्योधनेन प्रसंगः तृ. त. ३ No shelter should be given to him whose dispositon is not known, a louse called मंदविसर्पिणी was killed for the fault of a bug. अवि...शील. ब. ४ Pleasing the mind, charming. ५ Whiter. Here तर has no propriety since it is not said to be whiter than any thing. ६ A louse.

[...]पिते रक्तमास्वादयन्ती सुखेन कालं नयमाना तिष्ठति । अन्येद्युश्च [...] शयने कश्चिद्भ्राम्यन्नग्निमुखो नाम मत्कुणः समायातः । अथ तं [...] सा विषण्णवदना प्रोवाच । भो अग्निमुख कुतस्त्वमत्रानुचित-[...]नि समायातः । तद्यावन्न कश्चिद्वेत्ति तावच्छीघ्रं गम्यतामिति । स [...]ह । भगवति गृहागतस्यासाधोरपि नैतद्युज्यते वक्तुम् । उक्तं च ।

एह्यागच्छ समाश्वसासनमिदं कस्माच्चिराद्दृश्यसे<br>
का वार्ता अतिदुर्बलोऽसि कुशलं प्रीतोऽस्मि ते दर्शनात् ।<br>
एवं नीचजनेऽपि युज्यति गृहं प्राप्ते सतां सर्वदा<br>
धर्मोऽयं गृहमेधिनां निगदितः स्मार्तैर्लघुः स्वर्गदः ॥ २५३॥

अपरं मयानेकमानुषाणामनेकविधानि रुधिराण्यास्वादितान्याहा-[...]त्कटुतिक्तकषायाम्लरसास्वादानि न च कदाचिन्मधुररक्तं समा-[...]दितम् । तद्यदि त्वं प्रसादं करोषि तदस्य नृपतेर्विविधव्यञ्जनान्न-पानचोष्यलेह्यस्वाद्वाहारवशादस्य शरीरे यन्मिष्टं रक्तं संजातं तदा-स्वादनेन सौख्यं संपादयामि जिह्वाया इति । उक्तं च ।

---

१ Continued to pass her time &c. २ In that bed. तत्र = तस्मिन. ३ Before any one knows or finds you out. ४ Even to a man who is wicked. ५ Come, take heart, here is a seat, why do you come after a long time, what is the news, you are very feeble, is it well with you, I am pleased at seeing you; this mode of reception is always fit to be accorded even to a low person when he goes to the house of the good; this is recorded as the duty of householders by those who are versed in traditional law, and though trifling, it secures heaven (for the doer). समाश्वस for समाश्वसिहि. The root is here used in the 1st conjugation. After कुशलं supply अस्ति किम् or अपि before it. युज्यति is used for युज्यते. स्वर्गदः-स्वर्गं ददातीति ६ Having the taste of bitter, pungent, astringent and sour juices कटुतिक्त...रसानां आस्वादो येषां तानि (रुधिराणि). ब. ७ If you do me favour, or show me favour. ८ On account of his tasting sweet food, drink, things to be sucked and things to be licked, and full of condiments (व्यंजन) of various kinds. विविधव्यंजन is a Bahu. compound qualifying अन्न, पान &c. विविधव्यंजन...लेह्य; स्वादु. तृ. त. and स्वादु आहार, क. ९ Sweet, savoury. १० Obtain, get.

[1]रङ्कस्य नृपतेर्वापि जिह्वासौख्यं समं स्मृतम् ।
तन्मात्रं च स्मृतं सारं तदर्थं यतते जनः ॥ २५४ ॥

[2]यद्येव न भवेल्लोके कर्म जिह्वाप्रतुष्टिदम् ।
तन्न भृत्यो भवेत्कश्चित्कस्यचिद्वशगोऽथवा ॥ २५५ ॥

[3]यदसत्यं वदेन्मर्त्यो यद्वासेव्यं च सेवते ।
यद्गच्छति विदेशं च तत्सर्वमुदरार्थतः ॥ २५६ ॥

तन्मया गृहागतेन बुभुक्षया[4] पीड्यमानेनापि त्वत्सकाशाद्भोजनं लभ्यम् । तन्न त्वयैकाकिन्यास्य भूपते रक्तभोजनं[5] कर्तुं युज्यते । तच्छ्रुत्वा मन्दविसर्पिण्याह । भो मत्कुण अस्य नृपतेर्निद्रावशं[6] गतस्याहं रक्तमास्वादयामि पुनस्त्वमग्निमुखश्चपलश्च । तद्यदि मया सह रक्तपानं करोषि तत्तिष्ठ । अभीष्टतररक्तमास्वादय । सोऽब्रवीत् । भगवति एवं करिष्यामि । [9]यावत्त्वं नास्वादयसि प्रथमं नृपरक्तं तावन्मम देवगुरुकृतः शपथः स्याद्यदि तदास्वादयामि । एवं तयोः परस्परं वदतोः स राजा तच्छयनमासाद्य प्रसुप्तः । अथासौ मत्कुणो

---

१ The pleasure of the tongue in the case of a beggar and also in that of a king, is said to be equal; that much alone is the essence of eating and people strive for obtaining that alone. २ If there be no such thing in the world as gratifies the tongue, no one will be anybody's servant or under the control of any one जिह्वायाः प्रतुष्टिः = जिह्वाप्रतुष्टिः तां ददातीति. उप. ३ That a man speaks untruth, serves him who is not fit to be served and goes to a foreign country, is all for the sake of the belly. ४ Desire to eat and hence hunger. ( desid. noun from भुज् 7 A. ) ५ Meals consisting of blood. ६ When under the power of sleep; when asleep. ७ You, however, are fire-mouthed or hot-mouthed and very hasty or uncontrolled ( and may thus awaken the king by your sharp bite ). ८ More blood than you desire to drink अभीष्टतरं रक्तं. क. ९ I swear to you by my god and preceptor that I shall not taste the king's blood before you have first done it yourself.

जिह्वालौल्योत्कृष्टौत्सुक्याज्जाग्रतमपि तं महीपतिमदशत । अथवा साध्विदमुच्यते ।

स्वभावो नोपदेशेन शक्यते कर्तुमन्यथा ।
सुतप्तमपि पानीयं पुनर्गच्छति शीतताम् ॥ २५७ ॥
यदि स्याच्छीतलो वह्निः शीतांशुर्दहनात्मकः ।
न स्वभावोत्र मर्त्यानां शक्यते कर्तुमन्यथा ॥ २५८ ॥

अथासौ महीपतिः सूच्यग्रविद्ध इव तच्छयनं त्यक्त्वा तत्क्षणादेवोत्थितः । अहो ज्ञायतामत्र प्रच्छादने मत्कुणो यूका वा नूनं तिष्ठति येनाहं दष्ट इति । अथ ये कञ्चुकिनस्तत्र स्थितास्ते सत्वरं प्रच्छादनपटं गृहीत्वा सूक्ष्मदृष्ट्या वीक्षांचक्रुः । अत्रान्तरे स मत्कुणश्चापल्यात्खट्वान्तं प्रविष्टः । सा मन्दविसर्पिण्यपि वस्त्रसंध्यन्तर्गता तैर्दृष्टा व्यापादिता च ॥

अतोहं ब्रवीमि न ह्यविज्ञातशीलस्येति ।

एवं ज्ञात्वा त्वयैष वध्यः । नो चेत्त्वां व्यापादयिष्यति । उक्तं च ।

त्यक्ताश्चाभ्यन्तरा येन बाह्याश्चाभ्यन्तरीकृताः ।
स एव मृत्युमाप्नोति यथा राजा ककुद्रुमः ॥ २५९ ॥

पिङ्गलक आह । कथमेतत् । सोब्रवीत् ।

---

१ Through eagerness urged on by the greediness of tongue. जिह्वालौल्यात्कृष्ट. तं. न जिह्वालौल्यात्कृष्ट औत्सुक्य. क. २ Even while he was awake. ३ It is not possible to change (do otherwise) one's disposition by means of advice; water though well-heated becomes cool again. ४ Even if fire be cool and the moon burning hot, still the disposition of men cannot be changed, that is, it may perhaps be possible for the fire to be &c. but not possible for the disposition to be altered. शीतांशु –शीताः अंशवः यस्य सः. ५ As if pricked with the point of a needle. ६ In the cloth used for covering; in the coverlet. ७ With a minute search. ८ Examined. निरीक्षणं ईक्षां चक्रुः. The root ईक्ष् is generally conjugated in the Atmanepada. ९ Meanwhile. अस्मिन्नन्तरे. १० Entered a crevice in the cot. ११ Lying concealed at the joining of two pieces of garments. १२ He who has left off intimate friends and has made friends of strangers, will surely meet with death, as did the king ककुद्रुम (in the following story).

## ॥ कथा १० ॥

अस्ति कस्मिंश्चिद्वनोद्देशे चण्डरवो नाम शृगालः । स कदाचित्क्षुधाविष्टो[1] जिह्वालौल्यान्नगरमध्ये प्रविष्टः । अथ तं सारमेया[2] विलोक्य सर्वतः शब्दायमानाः[3] परिधाव्य तीक्ष्णदन्तैर्[4] भक्षयितुमारब्धाः[5] । सोपि तैर्भक्ष्यमाणः प्राणभयात्प्रत्यासन्नरजकगृहं[6] प्रविष्टः । तत्र नीलीरसं[7] परिपूर्णमहाभाण्डमासीत् । तत्र सारमेयैराक्रान्तो[8] भाण्डमध्ये पतितः । अथ यावन्निष्क्रान्तस्तावन्नीलीवर्णः[9] संजातः । तत्रापरे सारमेयास्तं शृगालमजानन्तो[10] यथाभीष्टदिशं जग्मुः । चण्डरवोपि दूरतरं प्रदेशमासाद्य काननाभिमुखं प्रतस्थे न च नीलवर्णेन कदाचिन्निजरङ्गस्त्यज्यते[11] । उक्तं च ।

[12]वज्रलेपस्य मूर्खस्य नारीणां कर्कटस्य च ।
एको ग्रहस्तु मीनानां नीलीमद्यपयोर्यथा ॥ २६० ॥

अथ तं हरगलगरलतमालसमप्रभमपूर्वं[13] सत्त्वमवलोक्य सर्वे सिंहव्याघ्रद्वीपिवृक[14]प्रभृतयोरण्यनिवासिनो भयव्याकुलितचित्ताः सम-

---

१ When he was once overtaken by hunger. २ Dogs. सारमेय = सरमाया अपत्यं पुमान्. Saramâ was the bitch of Gods and सारमेय is, therefore, a patronymic from सरमा. ३ Making a noise, that is, barking. ४ With their pointed teeth. ५ To tear, to devour. ६ Into the house of a washerman that was at hand. प्रत्यासन्नं च तत् रजकगृहं. क. ७ The juice of the Indigo plant. ८ Seized or caught. ९ Of the colour of indigo. नील्या वर्ण इव वर्णः यस्य सः. ब. १० Not knowing him to be a jackal. ११ Its own colour was not abandoned; it was not removed. १२ One is the grasp (or final is the grasp) of वज्रलेप, of a fool, of women, of a crab, of fishes and also of the colour indigo and of a drunkard, that is, when these have once clung fast to any thing, they do not leave it. वज्रलेप is a kind of cement prepared with diamond and other things. नीली च मद्यपश्च = नीलीमद्यपौ तयोः नीलीमद्यपयोः. १३ Resembling in colour the Tamâla tree which is as dark as the poison in the neck of हर (S'iva) हरगलगरल तमाल. क. हरगलगरल इव तमाल; तेन समा प्रभा यस्य सः. तं. ब. १४ द्वीपिन् A panther.

न्यात्पलायनक्रियां कुर्वन्ति कथयन्ति च। न ज्ञायतेस्य कीदृग्विचेष्टितं पौरुषं च। तद्दूरतरं गच्छामः। उक्तं च।

न यस्य चेष्टितं विद्यान्न कुलं न पराक्रमम्।
न तस्य विश्वसेत्प्राज्ञो यदीच्छेच्छ्रियमात्मनः॥ २६१॥

चण्डरवोपि भयव्याकुलितान्विज्ञायेदमाह। भो भोः श्वापदाः किं यूयं मां दृष्ट्वैव संत्रस्ता व्रजथ। तन्न भेतव्यम्। अहं ब्रह्मणाद्य स्वयमेव सृष्ट्वाभिहितः। यच्छ्वापदानां कश्चिद्राजा नास्ति तत्त्वं मयाद्य सर्वश्वापदप्रभुत्वेभिषिक्तस्ततो गत्वा तान्सर्वान्परिपालयेति। ततोहमत्रागतः। तन्मम च्छत्रच्छायायां सर्वैरपि श्वापदैर्वर्तितव्यम्। अहं ककुद्रुमो नाम राजा त्रैलोक्येपि संजातः। तच्छ्रुत्वा सिंहव्याघ्रपुरःसराः श्वापदाः स्वामिन्प्रभो समादिशेति वदन्तस्तं परिवव्रुः। अथ तेन सिंहस्यामात्यपदवी प्रदत्ता व्याघ्रस्य शय्यापालकत्वं द्वीपिनस्ताम्बूलाधिकारो वृकस्य द्वारपालकत्वम्। ये चात्मीयाः शृगालास्तैः सहालापमात्रमपि न करोति। शृगालाः सर्वेपि निःसारिताः। एवं तस्य राज्यक्रियया वर्तमानस्य सिंहादयो मृगान्व्यापाद्य तत्पुरतः प्रक्षिपन्ति। सोपि प्रभुधर्मेण सर्वेषां तान्प्रविभज्य प्रयच्छति। एवं गच्छति काले कदाचिद्दूरदेशे शब्दायमानाः शृगाला आकर्णिताः।

---

१ Say among themselves. २ Action. ३ If a wise man wishes for prosperity he should not put faith in him whose actions, family and exploits he does not know. विश्वसेत = विश्वस्यात्. ४ Knowing (them) to be overcome with fright. ५ Only by seeing me, only at my sight. ६ Being created. Here सृष्ट्वा has a passive force. ७ Have been crowned as the sovereign of all beasts. ८ Under the shade of my umbrella as king, that is, under my protection as your king. ९ With the lion and tiger as the foremost (सिंहव्याघ्रौ पुरःसरौ येषां ते (श्वापदाः)) १० Oh lord, oh liege. ११ Surrounded him Perf. of वृ with परि. १२ The dignity or post of minister. १३ The office of looking after the bed. १४ The office of carrying the betel-nutbox. १५ The office of door-keeper. १६ His own caste-animals. १७ While he was thus carrying on the duties of a king. १८ As is the duty of a lord. १९ Has connection with प्रयच्छति. २० Howling. Pre. P. of शब्दाय् denom. from शब्द

तेषां शब्दं श्रुत्वा पुलकित[१]तनुरानन्दाश्रुपूर्णनयन[२]स्तारस्वरेण[३] विरो-तु[४]मारब्धः । अथ ते सिंहादयस्तं तारस्वरमाकर्ण्य शृगालोयमिति मन्वा लज्जयाधोमुखाः[५] क्षणं स्थित्वा प्रोचुः । भो वाहिता[६] अनेन वयम् । क्षुद्रशृगालोयम् । तद्वध्यतामिति । सोपि तदाकर्ण्य पलायितुमिच्छंस्तत्र[७] स्थान एव सिंहादिभिः खण्डशः कृतो[८] मृतश्च ॥

अतोहं ब्रवीमि त्यक्ताश्चाभ्यन्तरा येनेति ।

तदाकर्ण्य पिङ्गलक आह । भो दमनक कः प्रत्ययो[९]त्र विषये यतः[१०] स ममोपरि दुष्टबुद्धिः । स आह । यदद्य ममाग्रे तेन निश्चयः कृतो यत्प्रभाते पिङ्गलकं वधिष्यामि[११] तदत्रैव[१२] प्रत्ययः । प्रभातेवसर[१३]वेलायामारक्त[१४]नयनः स्फुरिताधरो[१५] दिशोवलोकयन्ननुचितस्थानोपविष्ट[१६]स्त्वां क्रूरदृष्ट्या[१७] चावलोकयिष्यति । तदेवं ज्ञात्वा यदुचितं तत्कर्तव्यमिति कथयित्वा संजीवकसकाशं गतः । तं प्रणम्योपविष्टः । संजीवकोपि सोद्वेगाकारं[१८] मन्दगत्या समायान्तं तमुद्वीक्ष्य सादरतरमुवाच । भो मित्र स्वागतं[१९] ते । चिराद्दृष्टोसि । अपि शिवं[२०] भवतः । तत्कथय यनादेयमपि[२१] तुभ्यं गृहायाताय प्रयच्छामि । उक्तं च ।

---

१ With the body covered with the hair standing on end through delight, आनंदेन पुलकिता तनुर्यस्य ब. २ With the eyes filled with the tears of joy आनन्दाश्रुभिः पूर्णे नयने यस्य ब. ३ In a shrill or loud tone. ४ To cry, to howl ५ With the heads hung down (through shame) अधः मुखानि येषां. ब. ६ We have been made to carry burdens by him that is, we have been used as menials by him P. P. of the caus. of वह् 1 P. ७ तस्मिन्स्थाने एव On the very spot, then and there. ८ Was cut to pieces ९ What proof or evidence is there in this case? viz. that he is &c १० Since, because ११ For हनिष्यामि. १२ अस्मिन्नेव प्रत्ययः Herein alone lies the proof that you demand. १३ At the time when there is a *favourable opportunity* ( अवसर ). अवसरस्य वेलायां. ष त. १४ With reddish eyes. आरक्ते ( ईषद्रक्ते ) नयने यस्य सः ब. १५ With the lowerlip throbbing. स्फुरितः अधरः यस्य. ब. १६ Seated in a place above his rank. १७ With cruel looks. १८ With a dejected appearance or look, ब. १९ Welcome २० Are you well? २१ Even that thing which cannot be given.

[1]ते धन्यास्ते विवेकज्ञास्ते शस्या इह भूतले ।
आगच्छन्ति गृहे येषां कार्यार्थं सुहृदो जनाः ॥ २६२ ॥

दमनक आह । [2]भोः कथं शिवं सेवकजनस्य ।

[3]परवशः परायत्ताः सदा चित्तमनिर्वृतम् ।
स्वजीवितेऽप्यविश्वासस्तेषां ये राजसेवकाः ॥ २६३ ॥

तथा च । [4]सेवया धनमिच्छद्भिः सेवकैः पश्य यत्कृतम् ।
स्वातन्त्र्यं यच्छरीरस्य मूढैस्तदपि हारितम् ॥ २६४ ॥

[5]तावज्जन्मातिदुःखाय ततो दुर्गतता सदा ।
तत्रापि सेवया वृत्तिरहो दुःखपरंपरा ॥ २६५ ॥

[6]जीवन्तोऽपि मृताः पञ्च श्रूयन्ते किल भारते ।
दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ॥ २६६ ॥

[7]नाश्नाति सेवयौत्सुक्याद्विनिद्रो न प्रबुध्यते ॥
न निःशङ्कं वचो ब्रूते सेवकोऽप्यत्र जीवति ॥ २६७ ॥

१ Those alone are blessed, those alone are full of discrimination, and those alone are worthy of praise in this world, to whose houses friends repair on some business. विवेकं जानन्तीति. उप. २ How can those who are servants fare well? ३ The wealth of those who are the servants of a king, is dependent on others, their mind is always uneasy and they have no confidence even about their own life (being safe). परायत्ता = परेषु आयत्ता. स त. ४ See what is done by those servants who wish to obtain wealth by service the fools have lost even the mastery over their own bodies (because they entirely depend upon their masters). हारितम् P. P. of the caus. of हृ lit caused to be taken away. ५ Firstly (तावत्) birth itself causes great pain then there is always misery and in that again living is to be procured by service oh the series of calamities? दुर्गतता abstract noun from दुर्गत (miserable). दुर्गतस्य भावः. ६ These (the following five) though alive, are heard or said to be dead in the Bhárata, viz. he who is poor, he who is diseased, he who is foolish, he who is a traveller and he who is always a servant. For श्रूयन्ते किल भारते other editions read व्यासेन परिकीर्तिताः—declared by Vyása. ७ He who is a servant, cannot eat heartily by reason of his servitude, does not awake free from sleepiness, and does not speak anything without fear; but, he only lives in this world. विनिद्र. ब.

[1]सेवा श्ववृत्तिराख्याता यैस्तैर्मिथ्याः प्रजल्पितम् ।
स्वच्छन्दं चरति श्वात्र सेवकः परशासनात् ॥ २६८ ॥

[2]भूशय्या ब्रह्मचर्यं च कृशत्वं लघुभोजनम् ।
सेवकस्य यतेर्यद्वद्विशेषः पापधर्मजः ॥ २६९ ॥

[3]शीतातपादिकष्टानि सहते यानि सेवकः ।
धनाय तानि चाल्पानि यदि धर्मान्न मुच्यते ॥ २७० ॥

[4]मृदुनातिसुवृत्तेन सुमृष्टेनातिहारिणा ।
मोदकेनापि किं तेन निष्पत्तिर्यस्य सेवया ॥ २७१ ॥

संजीवक आह । अथ भवान्किं वक्तुमनाः । स आह । मित्र [5]स्वामिनां सचिवानां मन्त्रभेदं कर्तुं न युज्यते । उक्तं च ।

[6]यो मन्त्रं स्वामिनो भिन्द्यात्साचिव्ये संनियोजितः ।
स हत्वा नृपकार्यं तत्स्वयं च नरकं व्रजेत् ॥ २७२ ॥

---

१ Those, who have said that service is like the life led by a dog, have made a false statement, ( because ) a dog acts according to his pleasure, while a servant acts under the orders of others श्ववृत्तिराख्याता = श्ववृत्तिरिति आख्याता. स्वच्छन्दं यथा तथा अत्र. २ The ground used as bed, celibacy of life, thinness and scanty food—these are common both to a servant and a hermit; but the only difference between the two is the one arising from sin and virtue ( sin in the case of a servant and virtue in that of a hermit ). भूशय्या—भूमौ शय्या. क. यद्वत् similar. पापधर्मजः—पापधर्माभ्यां जातः. ३ The miseries arising from cold, heat and others, which a servant endures, have very little power to procure wealth even if he does not swerve from virtue ४ What is the use of that मोदक ( a kind of sweetmeat ) which is obtained from service, even though it be soft, very round, well cleaned and charming to look at. अतिहारिन् very attractive. ५ Construe स्वामिनां मन्त्रभेदं कर्तुं सचिवानां न युज्यते. It is not proper on the part of ministers, to divulge the counsels of their lords. ६ He, who being appointed to the post of minister, will reveal the secret of his master, will destroy or ruin the king's affair which he divulges and himself will go to hell.

[1]येन यस्य कृतो भेदः सचिवेन महीपतेः ।
तेनाशस्त्रवधस्तस्य कृत इत्याह नारदः ॥ २७३ ॥

तथापि मया तव स्नेहपाशबद्धेन[2] मन्त्रभेदः कार्यो यतस्त्वं मम वचनेनात्र राजकुले विश्वस्तः प्रविष्टश्च । उक्तं च ।

[3]विश्रम्भाद्यस्य यो मृत्युमवाप्नोति कथंचन ।
तस्य हत्या तदुत्था सा प्राहेदं वचनं मनुः ॥ २७४ ॥

तत्तवोपरि पिङ्गलकोयं दुष्टबुद्धिः कथितं चायानेन मत्पुरतश्चतुष्कर्णतया[4] यत्प्रभाते संजीवकं हत्वा समस्तमृगपरिवारं[5] चिरतृप्तिं[6] नेष्यामि । ततः स मयोक्तः । स्वामिन अयुक्तमिदं यन्मित्रद्रोहेण संजीवनं[7] क्रियते । उक्तं च ।

[8]अपि ब्रह्मवधं कृत्वा प्रायश्चित्तेन शुध्यति ।
तदर्हेण विचीर्णेन न कथंचित्सुहृद्द्रुहः ॥ २७५ ॥

ततस्तेनाहं सामर्षेणोक्तः[9] । भो दुष्टबुद्धे संजीवकस्तावच्छष्पभोजी वयं मांसाशिनस्तदस्माकं स्वाभाविकं[10] वैरमिति । कथं रिपुरुपेक्ष्यते । तस्मात्सामादिभिरुपायैर्हन्यते । न च हते तस्मिन्दोषः स्यात् । उक्तं च ।

---

१ That minister, who has betrayed his master's secrets, is said to have committed his murder without any weapon—so says Nárada. अशस्त्रवधः--नशास्त्रवधः. न. त. शस्त्रवधः. त. त. २ Bound to you by the ties of friendship ३ His murder arises from him, by placing confidence in whom he meets with death. This statement is made by Manu Construe यस्य विश्रंभात् यो मृत्युमवाप्नोति तस्य सा हत्या तदुत्थिता इति वचनं मनुः प्राह. तदुत्था = तस्मात् उत्था. पं. त. ४ In such a way as to be heard by four ears, that is, two persons only. ५ The retinue of the lion consisting of all the forest-animals. ६ Death or destruction. ७ Protection ( रक्षणं ) or it may be taken to mean feeding ( भरणं ) ८ Even if one commit the murder of a Bráhmana, he is freed from the sin thereof by undergoing an atonement (proportionately) adequate to the crime; but not from that of killing a friend. विचीर्णं P. P. of चर् 1 P. irregularly formed. ९ Full of anger, indignant सामर्षेण--आमर्षेण सहितेन. ब. १० Natural; inborn.

[1]दत्त्वापि कन्यकां वैरी [1]निहन्तव्यो विपश्चिता ।
अन्योपायैरशक्यो यो हते दोषो न विद्यते ॥ २७६ ॥

[2]कृत्याकृत्यं न मन्येत क्षत्रियो बुद्धिसंयुतः ।
सुप्तो वा द्रोणपुत्रेण धृष्टद्युम्नः पुरा हतः ॥ २७७ ॥

तदहं तस्य निश्चयं ज्ञात्वा त्वत्सकाशमुपागतः । सांप्रतं मे नास्ति विश्वासघातकदोषः । [3]तद्यत्ते प्रतिभाति तत्कुरुष्वेति । अथ संजीवकस्तद्वज्रपातदारुणं वचनं श्रुत्वा मोहमुपागतः । अथ चेतनां लब्ध्वा सवैराग्यमिदमाह । भोः साध्विदमुच्यते ।

[4]दुर्जनगम्या नार्यः प्रायेणास्नेहवान्भवति राजा ।
कृपणानुसारि च धनं मेघो गिरिदुर्गवर्षी च ॥ २७८ ॥

[6]अहं हि संमतो राज्ञो य एवं मन्यते कुधीः ।
बलीवर्दः स विज्ञेयो विषाणपरिवर्जितः ॥ २७९ ॥

[7]वरं वनं वरं भैक्ष्यं वरं भारोपजीवनम् ।
वरं व्याधिर्मनुष्याणां नाधिकारेण संपदः ॥ २८० ॥

---

१ A wise man should kill his enemy even if he has given him (enemy) his own daughter in marriage; there is no sin in destroying him who is not likely to be won over by other remedies. २ A talented warrior should not think of what is fit or unfit to do; for example, formerly, Dhrishtadyumna while sleep was killed by the *son of Drona* ( अश्वत्थामन् ). ३ So that, you may now do what you think proper under the circumstances. ४ Disinterestedly. वैराग्येण सहितं यथा तथा. अ. ५ Women become accessible to the wicked, the king is generally destitute of affection, wealth follows a miser, and rain falls on difficult places in mountains. दुर्जनगम्य त. त. कृपणानुसारि-कृपणमनुसरतीति. उप. गिरिदुर्ग-गिरीणां दुर्गं वर्षति सः. उप. ६ That dull-headed fellow who thinks that he is a favourite of the king or is honoured by the king, should be considered to be a full-grown bull without horns. कुधीः-कुत्सिता धीः यस्य-ब. ७ It is better for men to resort to a forest, to beg for livelihood, to subsist on carrying burden, or to have any disease, than to obtain wealth by holding an office ( under a king ). भारोपजीवनं-भारेण उपजीवनं. तृ. त.

तद्युक्तं मया कृतं यदनेन सह मैत्री विहिता। उक्तं च।

[1]ययोरेव समं वित्तं ययोरेव समं कुलम्।
तयोर्मैत्री विवाहश्च न तु पुष्टविपुष्टयोः॥ २८१॥

तथा च। [2]मृगा मृगैः सङ्गमनुव्रजन्ति
गावश्च गोभिस्तुरगास्तुरङ्गैः।
मूर्खाश्च मूर्खैः सुधियः सुधीभिः
समानशीलव्यसनेषु सख्यम्॥ २८२॥

तद्यदि गत्वा तं प्रसादयामि तथापि न प्रसादं यास्यति। उक्तं च।

[3]निमित्तमुद्दिश्य हि यः प्रकुप्यति
ध्रुवं स तस्यापगमे प्रसीदति।
अकारणद्वेषपरो हि यो भवे-
त्कथं नरोऽसौ परितोषमेष्यति॥ २८३॥

अहो साधु चेदमुच्यते।

[4]भक्तानामुपकारिणां परहितव्यापारयुक्तात्मनां

१ Friendship and alliance by marriage are proper only between those who are equal in point of wealth as well as birth, and not between those who are strong and those who are weak. For समं कृतं there is a different reading as समं बलं which gives a better sense than कृतं. २ Deer associate with deer, cows with cows, horses with horses, fools with fools, wise men with wise men, there is friendship between those whose dispositions are similar and those whose misfortunes are equal. समानं शीलव्यसनं येषां तेषु ब. ३ He, who gets angry from a particular cause, is surely pacified when that cause is removed; but how will he, who entertains hatred without any cause, be propitiated? अकारणात् द्वेषपरः = अकारणद्वेषपर. द्वेषः परं यस्य सः द्वेषपर. ब. ४ Misfortune is certain in the various failings even of those servants who are devoted, obliging and have their minds always directed towards accomplishing the good of others, who know the essence of the duties of servitude and who are free from treachery, while as regards success it may be obtained or may not be obtained; therefore, the service of kings like that of the ocean, is always attended with uncertainty or danger, *i.e*, as one is not sure to succeed in his maritime enterprise, so he is with respect to a king. परहितस्य व्यापारे युक्ता आत्मानः येषां ते. ब.

सेवासंव्यवहारतत्त्वविदुषां द्रोहच्युतानामपि ।
व्यापत्तिः स्खलितान्तरेषु नियता सिद्धिर्भवेद्वा न वा
तस्मादम्बुपतेरिवावनिपतेः सेवा सदाशङ्किनी ॥ २८४ ॥

तथा च । [1]भावस्निग्धैरुपकृतमपि द्वेष्यतां याति किंचि-
च्छाठ्यादन्यैरपकृतमपि प्रीतये चोपयाति ।
दुर्ग्राह्यत्वान्नृपतिमनसां नैकभावाश्रयाणां
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ २८५ ॥

तत्परिज्ञातं मया यत्प्रसादमसहमानैः समीपवर्तिभिरेष पिङ्गलकः प्रकोपितः । तेनायं ममादोषस्याप्येवं वदति । उक्तं च ।

[4]प्रभोः प्रसादमन्यस्य न सहन्तीह सेवकाः ।
सपत्न्य इव संक्रुद्धाः सपत्न्याः स्वाकृतेरपि ॥ २८६ ॥

भवति चैवं यद्गुणवता समीपवर्तिना तद्गुणैरन्येषां प्रसादो न भवति । उक्तं च ।

[6]गुणवत्तरपात्रेण च्छाद्यन्ते गुणिनां गुणाः ।
रात्रौ दीपशिखाकान्तिर्न भानावुदिते सति ॥ २८७ ॥

---

१ Even the obligations conferred by those who are heartily attached, are looked upon as hateful; while the little injury that is done by others deceitfully, becomes pleasing; on account of the unfathomable depth of the minds of kings which are filled with various feelings, the duty of servitude is very hard and impracticable even to saints. भावस्निग्ध. न. त. दुर्ग्राह्यत्व the quality of fathoming with difficulty. नैक...णां adj. of नृपतिमनसां. न एकभावानां आश्रयाणाम् ब. २ The favour shown (to me.) ३ Although I am free from blame. अदोष —नास्ति दोषः यस्य सः. ब. ४ Servants of kings cannot bear to see favour shown to any other person, as fellow-wives get angry with one of their own, though of a very charming form. स्वाकृतेः— शोभना आकृतिः यस्याः सा स्वाकृतिः तस्याः. ब. ५ When a qualified person is near. ६ The virtues of the virtuous are thrown into the shade by one superior to them in virtue; the flame of a lamp has lustre at night and not after the sun has risen. गुणवत्तरपात्र means one who is a receptacle of better qualities.

दमनक आह । भो मित्र यद्येवं तन्नास्ति ते भयम् । प्रकोपितोऽपि स दुर्जनैस्तव वचनेन प्रसादं[1] यास्यति । संजीवक आह । भो न युक्तमुक्तं भवता । लघूनामपि दुर्जनानां मध्ये वस्तुं न शक्यते । उपायान्तरं[2] विधाय ते नूनं घ्नन्ति । उक्तं च ।

[3]बहवः पण्डिताः क्षुद्राः सर्वे मायोपजीविनः ।
कुर्युः कृत्यमकृत्यं वा उष्ट्रे काकादयो यथा ॥ २८८ ॥

दमनक आह । कथमेतत् । सोऽब्रवीत् ।

## ॥ कथा ११ ॥

[4]अस्ति कस्मिंश्चिद्वनोद्देशे मदोत्कटो नाम सिंहः प्रतिवसति स्म । तस्य चानुचरा अन्ये द्वीपिवायसगोमायवः सन्ति । अथ कदाचित्तैरितस्ततो भ्रमद्भिः सार्थाद्भ्रष्टः[6] कथनको नामोष्ट्रो दृष्टः । अथ सिंह आह । अहो अपूर्वमिदं सत्त्वम् । तज्ज्ञायतां किमेतदारण्यकं ग्राम्यं वेति[7] । तच्छ्रुत्वा वायस आह । भोः स्वामिन्ग्राम्योऽयमुष्ट्रनामा जीवविशेषः[8] तव भोज्यः[9] । तद्व्यापाद्यताम् । सिंह आह । नाहं गृहमागतं हन्मि । उक्तं च ।

[10]गृहं शत्रुमपि प्राप्तं विश्वस्तमकुतोभयम् ।
यो हन्यात्तस्य पापं स्याच्छतब्राह्मणघातजम् ॥ २८९ ॥

१ Will be pacified. २ A remedy other than strength. अन्य उपाय . क. ३ Many are the insignificant wise people, all living by trick or deceit, and they will do any thing whether fit to do or unfit, just as the crow and others acted towards the camel ( in the following story. ). मायोपजीविन —मायया उपजीवन्ति इति. उप. ४ अस्ति &c. प्रतिवसति स्म. Here अस्ति is superfluous as a verb showing existence. It, therefore, should be taken to mean something like "there", "they say that" &c. in English. ५ A jackal. ६ Fallen away from the herd. ७ Whether it is a wild animal or a domestic one. ८ A particular kind of creature or animal. ९ Fit to be devoured by you ; a prey for you. १० He, who kills even his enemy who is come to his house, who has confided in him and who is, therefore, free from fear, will be guilty of sin amounting to that arising from the murder of a hundred Bráhmans. अकुतोभयम्=नास्ति कुतोपि भयं यस्य. ब. श. तब्राह्मणानां घातात्जातम्. पं. त.

तदभयप्रदानं[1] दत्त्वा मत्सकाशमानीयतां येनास्यागमकारणं पृच्छामि । अथासौ सर्वैरपि विश्वास्याभयप्रदानं दत्त्वा मदोत्कटसकाशमानीतः प्रणम्योपविष्टश्च । ततस्तस्य[3] पृच्छतस्तेनात्मवृत्तान्तः सार्थभ्रंश[4]समुद्भवो निवेदितः । ततः सिंहेनोक्तम् । भोः कथनक मा त्वं ग्रामं गत्वा भूयोपि भारोद्वहन[5]कष्टभागी भूयाः । तदत्रारण्ये निर्विशङ्को[6] मरकत[7]सदृशानि शष्पाग्राणि[8] भक्षयन्मया सह सदैव वस । सोपि तथेत्युक्त्वा तेषां मध्ये विचरन्न कुतोपि[9] भयमिति सुखेनास्ते । तथान्येद्युर्मदोत्कटस्य महागजेनारण्यचारिणा[10] सह युद्धमभवत् । ततस्तस्य दन्तमुसलप्रहारै[11]र्व्यथा संजाता । व्यथितः कथमपि[12] प्राणैर्न वियुक्तः । अथ शरीरासामर्थ्यान्न[13] कुत्रचित्पदमपि चलितुं शक्नोति । ते सर्वे काकादयोप्यप्रभुत्वेन[14] क्षुधाविष्टाः परं दुःखं भेजुः । अथ तान्सिंहः प्राह । भो अन्विष्यतां कुत्रचित्किंचित्सत्त्वं येनाहमेतामपि[15] दशां प्राप्तस्तद्धत्वा युष्मद्भोजनं संपादयामि । अथ ते चत्वारोपि भ्रमितुमारब्धा यावन्न किंचित्सत्त्वं पश्यन्ति तावद्वायसशृगालौ परस्परं मन्त्रयतः । शृगाल आह । भो वायस किं प्रभूत[16]भ्रान्तेन । अयमस्माकं प्रभोः कथनको विश्वस्त[17]स्तिष्ठति । तदेनं हत्वा प्राणयात्रां कुर्मः । वायस आह । युक्तमुक्तं भवता परं स्वामिना तस्याभयप्रदानं दत्तमास्ते न वध्योय-

---

१ Being given a promise of safety. २ Being made to confide. ३ Him who was asking. ४ Proceeding from the separation from the herd, that is, about his being separated &c. ५ Enduring the hardship of carrying loads. भारोद्वहनकष्टं भजते इति भारोद्वहनकष्टभागिन्. ६ Free from fear or danger. ७ Resembling emerald, as green as emerald &c. ८ The sprouts of grass. ९ Thinking he had no fear of any body. १० Living in the forest. ११ With the strokes of his pestle—like tusks. दन्त एव मुसलं. क. १२ With great difficulty. १३ Through the inability of the body. १४ For want of chief power. १५ Though reduced to this state. १६ What is the use of wandering too much? १७ Trusted, confidential.

मिति। शृगाल आह। भो वायस अहं स्वामिनं विज्ञाप्य तथा करिष्ये यथा स्वामी वधं करिष्यति[1]। तत्तिष्ठन्तु भवन्तोऽत्रैव याव-त्स्वं गृहं गत्वा प्रभोराज्ञां गृहीत्वा चागच्छामि। एवमभिधाय सत्वरं सिंहमुपस्थितः। अथ सिंहमासाद्येदमाह। स्वामिन्समस्तं वनं भ्रान्त्वा वयमागताः। न किंचित्सत्त्वमासादितम्। तत्किं कुर्मो वयम्। संप्रति वयं बुभुक्षया पदमपि चलितुं न शक्नुमः। देवोऽपि पथ्याशी[2] वर्तते। तद्यदि देवादेशो भवति तत्कथनकपिशितेनाद्य[3] पथ्यक्रिया क्रियते। अथ सिंहस्तस्य तद्दारुणं वचनमाकर्ण्य सकोपमिदमाह। धिक्पापा-धम यद्येवं भूयोऽपि वदसि ततस्त्वां तत्क्षणेन वधिष्यामि यतो मया तस्याभयं दत्तम्। तत्कथं व्यापादयामि। उक्तं च।

न गोप्रदानं न महीप्रदानं
न चान्नदानं हि तथा प्रदानम्।
यथा वदन्तीह बुधाः प्रधानं
सर्वप्रदानेष्वभयप्रदानम्[4] ॥ २९० ॥

तच्छ्रुत्वा शृगाल आह। स्वामिन्यद्यभयप्रदानं दत्त्वा वधः क्रियते तदेष दोषो भवति। पुनर्यदि देवपादानां भक्त्या[5] स आत्मनो जीवि-तव्यं प्रयच्छति तन्न दोषः। ततो यदि स स्वयमेवात्मानं वधाय[6] नि-योजयति तद्वध्योऽन्यथास्माकं मध्यादेकतमो वध्य इति यतो देवपादाः पथ्याशिनः क्षुन्निरोधादन्त्यां[7] दशां[8] यास्यन्ति। तत्किमेतैः[9] प्राणैरस्मा-कं ये स्वाम्यर्थे न यास्यन्ति। अपरं पश्चादप्यस्माभिर्वह्निप्रवेशः[10] का-र्यो यदि स्वामिपादानां किंचिदनिष्टं[11] भविष्यति। उक्तं च।

---

१ Shall act in such a way that &c. २ One who requires wholesome food पथ्यमश्नातीति. ३ Flesh. ४ The wise do not attach so much importance to the giving away of a cow, land, food and charity in general as they do to the promise of safety considering it as the chief of all gifts. ५ By reason of his devotion to your majesty. ६ Offers himself up as a victim. ७ Through the non-gratification of hunger, by checking hunger. ८ The last extremity. ९ What is the use of these our lives if they are not given up for our lord? १० Entering the fire by way of suicide. ११ Any mishap—death.

[1]यस्मिन्कुले यः पुरुषः प्रधानः
स सर्वयत्नैः परिरक्षणीयः ।
तस्मिन्विनष्टे स्वकुलं विनष्टं
न नाभिभङ्गे ह्यरका वहन्ति ॥ २९१ ॥

तदाकर्ण्य मदोत्कट आह । यद्येवं तत्कुरुध्व यद्रोचते । तच्छ्रुत्वा स सत्वरं गत्वा तानाह । भोः स्वामिनो महत्यवस्था[2] वर्तते तत्किं पर्यटितेन । तेन विना कोऽत्रास्मान्रक्षयिष्यति । तद्गत्वा तस्य क्षुद्दोषात्परलोकं प्रस्थितस्यात्मशरीरदानं[3] कुर्मो येन स्वामिप्रसादस्यानृणतां[4] गच्छामः । उक्तं च ।

[5]आपदं प्राप्नुयात्स्वामी यस्य भृत्यस्य जीवतः ।
प्राणेषु विद्यमानेषु स भृत्यो नरकं व्रजेत् ॥ २९२ ॥

इति श्रुत्वा ते सर्वे बाष्पपूरितदृशो[6] मदोत्कटं प्रणम्योपविष्टाः । तान्दृष्ट्वा मदोत्कट आह । भोः प्राप्तं दृष्टं वा किंचित्सत्त्वम् । अथ तेषां मध्यात्काकः प्रोवाच । स्वामिन्वयं तावत्सर्वत्र पर्यटिताः परं न किंचित्सत्त्वमासादितं दृष्टं वा । तदद्य मां भक्षयित्वा प्राणान्धारयतु[7] स्वामी येन देवस्याप्यायना[8] भवति मम पुनः स्वर्गप्राप्तिरिति । उक्तं च ।

[9]स्वाम्यर्थे यस्त्यजेत्प्राणान्भृत्यो भक्तिसमन्वितः ।
स परं पदमाप्नोति जरामरणवर्जितम् ॥ २९३ ॥

---

१ That man, who is the chief of a family, should be saved with all efforts; if he perish, his whole family perishes, for when the nave of a wheel is broken, the spokes do not move. २ Our lord is in a serious condition, his condition is very precarious ( महती lit. great, serious ). ३ Who is about to depart to the next world through hunger. ४ Freedom from debt. ५ That servant will go to hell who being alive, the master will meet with calamities ६ With eyes filled with tears. ७ Support. ८ Satisfaction. ९ That servant, who being full of devotion, gives up his life for the sake of his master, obtains a very high position free from oldage and death. परं = परमं-जरामरणाभ्यां वर्जितं. तृ. त.

तच्छ्रुत्वा शृगाल आह । भोः स्वल्पकायो भवान् । भवद्भक्षणा-
त्स्वामिनस्तावत्प्राणयात्रा न भवत्यपरो दोषश्च तावत्समुत्पद्यते । उक्तं च ।

[१]काकमांसं शुनोच्छिष्टं स्वल्पं तदपि दुर्बलम् ।
भक्षितेनापि किं तेन तृप्तिर्येन न जायते ॥ २९४ ॥

तद्दर्शिता स्वामिभक्तिर्भवता गतं चानृण्यं[२] भर्तृपिण्डस्य प्राप्तश्चोभ-
यलोके साधुवादः[३] । तदपसराग्रतः । अहं स्वामिनं विज्ञापयामि । त-
थानुष्ठिते शृगालः सादरं प्रणम्योपविष्टः । स्वामिन्मां भक्षयित्वाद्य
प्राणयात्रां विधाय ममोभयलोकप्राप्तिं[४] कुरु । उक्तं च ।

[५]स्वाम्यायत्ताः सदा प्राणा भृत्यानामर्जिता धनैः ।
यतस्ततो न दोषोऽस्ति तेषां ग्रहणसंभवः ॥ २९५ ॥

अथ तच्छ्रुत्वा द्वीप्याह । भोः साधूक्तं भवता पुनर्भवानपि स्वल्प-
कायः स्वजातिश्च नखायुधत्वादभक्ष्य[६] एव । उक्तं च ।

[७]नाभक्ष्यं भक्षयेत्प्राज्ञः प्राणैः कण्ठगतैरपि ।
विशेषात्तदपि स्तोकं लोकद्वयविनाशकम् ॥ २९६ ॥

---

१ The flesh of a crow as also the remains of a dog's food are small and those again of little strength; what is the use even if one eat them since no satisfaction is produced from them. २ You have thus paid the debt which you owed to your master for support &c. ३ Praises, commendation. ४ Thus give me both the worlds (this and the next). ५ The lives of servants which are, as it were, earned with the master's wealth, are solely at the master's service, and so there is no blame attached to one if they (lives) are taken. ग्रहणसंभव — ग्रहणात् संभवः [illegible]. प. व. ६ By reason of your being furnished with nails for weapons. नखमेवायुधं यस्य स तस्य भावः व. नखायुधत्वं. ७ A wise man should not eat what is unfit to eat even if he be at the point of death; even if that be little, it particularly destroys both the worlds, that is, one's happiness here as well as in heaven.

तद्दर्शितं त्वयात्मनः कौलीन्यम् । अथवा साधु चेदमुच्यते ।

[1]एतदर्थं कुलीनानां नृपाः कुर्वन्ति संग्रहम् ।
आदिमध्यावसानेषु न ते गच्छन्ति विक्रियाम् ॥ २९७ ॥

तदपसराग्रतो येनाहं स्वामिनं विज्ञापयामि । तथानुष्ठिते द्वीपी प्रणम्य मदोत्कटमाह । स्वामिन्क्रियतामद्य मम प्राणैः प्राणयात्रा दीयतामक्षयो[2]वासः स्वर्गे मम विस्तार्यतां क्षितितले प्रभूतं यश इति न मात्र विस्मयः कार्यः । उक्तं च ।

[3]मृतानां स्वामिनः कार्ये भृत्यानामनुवर्तिनाम् ।
भवेत्स्वर्गेऽक्षयो वासः कीर्तिश्च धरणीतले ॥ २९८ ॥

तच्छ्रुत्वा क्रथनकश्चिन्तयामास । एतैस्तावत्सर्वैरपि शोभावाक्या[4]न्युक्तानि न चैकोऽपि स्वामिना विनाशितः । तदहमपि प्राप्तकालं[5] वक्ष्यामि चित्रकं[6] येन मद्वचनमेते त्रयोऽपि समर्थयन्ति[7] । इति निश्चित्य प्रोवाच । भोः सत्यमुक्तं भवता परं भवानपि नखायुधः । तत्कथं भवन्तं स्वामी भक्षयति । उक्तं च ।

[8]मनसापि स्वजात्यानां योऽनिष्टानि प्रचिन्तयेत् ।
भवन्ति तस्य तान्येव इह लोके परत्र च ॥ २९९ ॥

तदपसराग्रतो येनाहं स्वामिनं विज्ञापयामि । तथानुष्ठिते क्रथनकोऽग्रे स्थित्वा प्रणम्योवाच । स्वामिन् एतदभक्ष्यास्तव तन्मम प्राणैः प्राणयात्रा विधीयतां येन ममोभयलोकप्राप्तिर्भवति । उक्तं च ।

---

१ It is for this reason that the kings keep around them noble persons, for they do not change at the beginning, in the middle and end, that is, they always remain what they are. आदि...षु-द्वंद्व. २ Eternal, everlasting. ३ Those servants, who die for the sake of their masters and who are obedient, will live forever in heaven and their fame will remain on earth. ४ Speeches of beauty, *i. e.*, beautiful or complimentary words. ५ What befits the occasion. प्राप्त कालः यस्य तत्. ब. ६ A tiger or leopard. ७ To consider, to believe. ८ These very evils which a man thinks of doing to his castemen, befall him, both in this as well as the next world.

[1]न यज्वानोऽपि गच्छन्ति तां गतिं नैव योगिनः ।
यां यान्ति प्रोज्झितप्राणाः स्वाम्यर्थे सेवकोत्तमाः ॥ ३०० ॥

एवमभिहिते ताभ्यां शृगालचित्रकाभ्यां विदारितोभयकुक्षिः[2] कथनकः प्राणानत्याक्षीत्[3] । ततश्च तैः क्षुद्रपण्डितैः सर्वैर्भक्षितः ॥

अतोऽहं ब्रवीमि बहवः पण्डिताः क्षुद्रा इति ।
तद्भद्र क्षुद्रपरिवारोऽयं राजा मया संपरिकल्पित । उक्तं च ।

[4]अशुद्धप्रकृतौ राज्ञि जनता नानुरज्यते ।
यथा गृध्रसमासन्नः कलहंसः समाचरेत् ॥ ३०१ ॥

तथा च । [5]गृध्राकारोऽपि सेव्यः स्याद्धंसाकारैः सभासदैः ।
हंसाकारोऽपि संत्याज्यो गृध्राकारैः स तैर्नृपः ॥ ३०२ ॥

तन्नूनं ममोपरि केनचिद्दुर्जनेनायं प्रकोपितः । तेनैवं वदति ।
अथवा भवत्येतत् । उक्तं च ।

[6] कर्णविषेण च भग्नः किं किं न करोति बालिशो लोकः ।
क्षपणकतामपि धत्ते पिबति सुरां नरकपालेन ॥ ३०३ ॥

अथवा साध्विदमुच्यते ।

---

१ Neither sacrificers nor ascetics attain to that dignity, which excellent servants do ( attain ) by sacrificing their lives for the sake of their masters. प्रोज्झिताः प्राणा य. ब. २ Having both the sides torn open. विदारिते उभयकुक्षी यस्य. ब. ३ Known or found out. ४ The subjects or people do not become attached to a king whose ministers are dishonest or foul ; and he will act like a gander overtaken by a vulture. अशुद्धप्रकृतौ-अशुद्धाः प्रकृतयो यस्य स. ब. ५ Even though a king be of the nature of vultures, he is fit to be served when he has councillors of the nature of swans ; while when he is of the nature of swans, he should be abandoned by reason of his having councillors of the nature of vultures. गृध्राकार - गृध्रस्येव आकारः यस्य स. ब. ६ When spoiled by the poison of the ear what thing will a foolish person not do ? He will accept asceticism and drink wine in a pot of the skull of human beings.

१ पादाहतोपि दृढदण्डसमाहतोपि
यं दंष्ट्रया स्पृशति तं किल हन्ति सर्पः ।
कोप्येष एव पिशुनोग्रमनुष्यधर्मः
कर्णे परं स्पृशति हन्ति परं समूलम् ॥ ३०४ ॥

तथा च । २अहो खलभुजङ्गस्य विपरीतवधक्रमः ।
कर्णे लगति चान्यस्य प्राणैरन्यो वियुज्यते ॥ ३०५ ॥

तदेवं गतेपि किं कर्तव्यमिति । अहं त्वां सुहृद्भावात्पृच्छामि । दमनक आह । तद्देशान्तरगमनं युज्यते नैवंविधस्य कुस्वामिनः सेवां विधातुम् । उक्तं च ।

५गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥ ३०६ ॥

संजीवक आह । अस्मत्परं स्वामिनि कुपिते गन्तुं न शक्यते न चान्यत्र गतानामपि निर्वृतिर्भवति । उक्तं च ।

६महतां योपराध्येत दूरस्थोस्मीति नाश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू ताभ्यां हन्ति हिंसितः ॥ ३०७ ॥

१ It is a fact that a snake, even though struck with the foot and beaten with a strong stick, kills him alone whom he *touches with his teeth* (bites); while very strange (indescribable) is this action of a terrible slanderer in the shape of a human being, because he touches the ear of one man and kills another entirely, *i. e*, he whispers something in the ears of one person and destroys another. पादहत and दृढ are both त. त. पिशुन एव उग्र मनुष्य पिशुनोग्रमनुष्य. क. तस्य धर्म -ष. त. २ Very strange or extraordinary is the mode of killing of a serpent in the shape of a wicked person; because he whispers something in the ear of one man, while another dies. खलभुजग-खलभुजंग इ. क. For विपरीत other editions read विचित्र. ३ Through friendship, as a friend. ४ A bad master. ५ Abandonment is ordained even of a preceptor who is elated with pride, does not know what is fit or unfit to do and goes astray. ६ He, who offends the great, should not take comfort in the fact that he is far away from them; for the arms of a talented person are long and he strikes with them when injured.

तद्युद्धं मुक्त्वा मे नास्त्यन्यच्छ्रेयस्करम्। उक्तं च।

[3]न तीर्न्सुतीर्थैस्तपसा च लोका-
स्स्वर्गैषिणो दानशतैः सुवित्तैः।
क्षणेन यान्यान्ति रणेषु धीराः
प्राणान्समुज्झन्ति हि ये सुशीलाः॥ ३०८॥

[4]मृतैः संप्राप्यते स्वर्गो जीवद्भिः कीर्तिरुत्तमा।
तदुभावपि शूराणां गुणावेतौ न दुर्लभौ॥ ३०९॥

तथा च। [5]होमार्थैर्विविधप्रदानविधिना सद्विप्रवृन्दार्चनै-
र्यज्ञैर्भूरिसुदक्षिणैः सुविहितैः संप्राप्यते यत्फलम्।
सत्तीर्थाश्रमवासहोमनियमैश्चान्द्रायणाद्यैः कृतैः
पुम्भिस्तत्फलमाहवे विनिहतैः संप्राप्यते तत्क्षणात्॥३१०॥

तदाकर्ण्य दमनकश्चिन्तयामास। तद्युद्धाय कृतनिश्चयोयं दृश्यते दुरात्मा। तद्यदि कदाचित्तीक्ष्णशृङ्गाभ्यां स्वामिनं प्रहरिष्यति तन्महाननर्थः संपत्स्यते। [6]तदेनं भूयोपि स्वबुध्या प्रबोध्य तथा करोमि यथा देशान्तरगमनं करोति। आह च। भो मित्र सम्यगभिहितं भवता परं किंतु [7]कः स्वामिभृत्ययोः संग्रामः। उक्तं च।

---

१ Without. २ Beneficial. ३ Those worlds which, those bold persons who lose their lives in battle, obtain in a moment, are not obtained by those desirous of going to heaven even by means of good holy places, penance, by hundreds of charitable acts and by wealth. ४ By dying heaven is obtained and by living excellent fame is secured, so both these advantages ( गुणौ ) are not difficult to be obtained by the brave, that is, they can easily obtain them ५ Those persons, who are killed in battle, immediately obtain that fruit which is obtained by oblations to fire accompanied with various kinds of presents, by worshipping multitudes of good Brâhma*n*s, by sacrifices in which much wealth is bestowed as Dakshi*n*a and also by residence in a holy place, oblations to fire, vows and Chândrâya*n*a vow. ६ Having advised him, having awakened him to the reality of his position. ७ What battle is there between a lord and his servant, that is, the fight would be unequal.

बलवन्तं रिपुं दृष्ट्वा किलात्मानं प्रगोपयेत् ।
बलवद्भिश्च कर्तव्या शरच्चन्द्रप्रकाशता ॥ ३११ ।

अन्यच्च । शत्रोर्बलमविज्ञाय वैरमारभते तु यः ।
स पराभवमाप्नोति समुद्रष्टिट्टिभाद्यथा ॥ ३१२ ॥

संजीवक आह । कथमेतत् । सोऽब्रवीत् ।

## ॥ कथा १२ ॥

कस्मिंश्चित्समुद्रैकदेशे टिट्टिभदंपती वसतः । ततो गच्छति काल ऋतुसमयमासाद्य टिट्टिभी गर्भमाधत्त । आसन्नप्रसवा सती टिट्टिभमूचे । भोः कान्त मम प्रसवसमयो वर्तते तद्विचिन्त्यतां किमपि निरुपद्रवं स्थानं येन तत्राहमण्डकमोक्षणं करोमि । टिट्टिभ आह । भद्रे रम्योयं समुद्रप्रदेशः । तदत्रैव प्रसवः कार्यः । सा प्राह । अत्र पूर्णिमादिने समुद्रवेला चटति । सा मत्तगजेन्द्रानप्याकर्षति । तद्दूरमन्यत्र किंचित्स्थानमन्विष्यताम् । तच्छ्रुत्वा विहस्य टिट्टिभ आह । भद्रे न युक्तमुक्तं भवत्या । का मात्रा समुद्रस्य यो मम दूषयिष्यति प्रसूतिम् । तद्विश्रब्धात्रैव गर्भं मुञ्च । उक्तं च ।

१ Having seen a powerful enemy one, should protect himself or hide himself from him; while those who are powerful should assume the brilliancy of the moon in the *Sarat season* ( the bright light of the moon in आश्विन and कार्तिक is well known) शरच्चन्द्रप्रकाशता--शरच्चन्द्रप्रकाशस्य भाव. २ He, who commences hostilities without ascertaining the strength of the enemy meets with a defeat, as the sea *sustained a defeat* at the hands of a टिट्टिभ ( a lapwing ). ३ In one part of the sea. ४ A couple, a pair. This word is made up of जाया and पति. ५ The time favourable for conception. ६ Had conception, conceived. ७ Near her delivery, about to be confined. आसन्नः प्रसवः यस्याः सा. ब. ८ The laying of eggs. ९ The tide of the sea comes up or reaches. १० Hurt, injure. ११ Free from fear, confident.

[१]यः पराभवसंभ्रान्तः स्वस्थानं संत्यजेन्नरः।
तेन चेत्पुत्रिणी माता तद्वन्ध्या केन कथ्यते॥ ३१३॥

तच्छ्रुत्वा समुद्रश्चिन्तयामास। [२]अहो गर्वः पक्षिकीटस्यास्य। अथवा साध्विदमुच्यते।

[३]उत्क्षिप्य टिट्टिभः पादावास्ते भङ्गभयाद्दिवः।
स्वचित्तकल्पितो गर्वः कस्य नात्रापि विद्यते॥ ३१४॥

[४]तन्मयास्य प्रमाणं कुतूहलादपि द्रष्टव्यम्। किं ममैषोऽण्डापहारे कृते करिष्यति। इति चिन्तयित्वा स्थितः। अथ प्रसवानन्तरं प्राणयात्रार्थं गतायाष्टिट्टिभ्याः समुद्रो [५]वेलाव्याजेनाण्डान्यपजहार। अथायाता सा टिट्टिभी प्रसवस्थानं शून्यमवलोक्य प्रलपन्ती टिट्टिभमूचे। भो मूर्ख कथितमर्थान्मया ते यत्समुद्रवेलयाण्डानां विनाशो भविष्यति तद्दूरतरं व्रजावः परं मूढतयाहंकार[६]माश्रित्य मम वचनं न करोषि। अथवा साध्विदमुच्यते।

[७]सुहृदां हितकामानां न करोतीह यो वचः।
स कूर्म इव दुर्बुद्धिः काष्ठाद्भ्रष्टो विनश्यति॥ ३१५॥

टिट्टिभ आह। कथमेतत्। साब्रवीत्।

---

१ If a mother is to be called पुत्रिणी (a woman having a son) by having that son, who, being defeated abandons his own place, for what son should she be called barren? that is, she is a barren whose son &c. २ Oh! how great is the pride of this miserable bird! The word कीट at the end of compounds has the sense of contempt. पक्षी एव कीटः. क. ३ The *tittibha* bird lies down with its legs upwards (throwing its legs up) through the fear of the breaking of the sky (to support it); who has no pride conceived in his own mind? This verse is found written as under:—स्वचित्तकल्पितो गर्वः कस्य नाम न विद्यते। उत्क्षिप्य टिट्टिभः पादौ शेते भङ्गभयाद्दिवः॥ स्वचित्तकल्पित स. त. ४ Let me then see the truth of this out of curiosity at least (if for nothing else). ५ Under the pretext of tide. ६ Having recourse to pride or egotism. ७ He, who does not listen to the advice of friends who are desirous of doing him good, perishes like a foolish tortoise falling down from a piece of wood. And hind. व.

## ॥ कथा १३ ॥

अस्ति कस्मिंश्चिज्जलाशये कम्बुग्रीवो नाम कच्छपः । तस्य संकटविकटनाम्नी मित्रे हंसजातीये[1] परमस्नेहमाश्रिते । तौ च हंसौ सरस्तीरमासाद्य तेन सहानेकदेवर्षिमहर्षीणां कथाः कृत्वास्तमनवेलायां स्वनीडसंश्रयं[2] कुरुतः । अथ गच्छति कालेनावृष्टिवशात्सरः शनैः शनैः शोषमगमत् । ततस्तद्दुःखदुःखितौ[3] तावूचतुः । भो मित्र जम्बालशेषमेतत्सरः[4] संजातं तत्कथं भवान्भविष्यतीति[5] व्याकुलत्वं[6] नो हृदि वर्तते । तच्छ्रुत्वा कम्बुग्रीव आह । भोः सांप्रतं नास्त्यस्माकं जीवितव्यं[7] जलाभावात् । तथाप्युपायश्चिन्त्यतामिति । उक्तं च ।

त्याज्यं न धैर्यं विधुरेऽपि काले[8]
धैर्यात्कदाचिद्गतिमाप्नुयात्सः ।
यथा समुद्रेऽपि च पोतभङ्गे
सांयात्रिको वाञ्छति तर्तुमेव ॥ ३१६ ॥

अपरं च ।

मित्रार्थे[9] बान्धवार्थे च बुद्धिमान्यतते सदा ।
जातास्वापत्सु यत्नेन जगादेदं वचो मनुः ॥ ३१७ ॥

तदानीयतां काचिद्दृढरज्जुर्लघु काष्ठं वा अन्विष्यतां च प्रभूतजलं[10]-

---

१ Of the swan-kind. २ Resorted to or went to their nests for shelter (during night). ३ Grieved at his grief. तस्य (कच्छपस्य) दुःखेन दुःखितौ. ४ Having only the mud remaining. जम्बाल एव शेषः यस्य. ब. ५ How will it fare with you? what will be your state? ६ Anxiety, perplexity. ७ It is not possible for us to live. ८ Even though the times be adverse, one should not give up courage; perhaps through courage one (सः) may obtain success (गतिं); just as in the sea when a boat is broken, a voyaging merchant wishes only to cross in safety. तर्तुम्=तरीतुं or तरितुं तॄ being a set root. ९ A talented man always strives with efforts for the sake of a friend or relative when calamities befall, so says Manu. १० Full of plentiful water.

[redacted] नगरे येन मया मध्यप्रदेशे दन्तैर्गृहीते सति युवां कोटिभागयो-[redacted] मया सहितं संगृह्य तत्सरो नयथः । तावूचतुः । भो मित्र [redacted] करिष्यावः परं भवता मौनव्रतेन भाव्यं नो चेत्तव काष्ठात्पातो [redacted] ष्यति । तथानुष्ठिते गच्छता कम्बुग्रीवेणाधोभागव्यवस्थितं किं-[redacted] पुरमालोकितम् । तत्र ये पौरास्ते तथा नीयमानं विलोक्य सवि-स्मयमिदमूचुः । अहो चक्राकारं किमपि पक्षिभ्यां नीयते । पश्यत पश्यत । अथ तेषां कोलाहलमाकर्ण्य कम्बुग्रीव आह । भोः किमेष कोलाहल इति वक्तुमना अर्धोक्ते पतितः पौरैः खण्डशः कृतश्च । अतोऽहं ब्रवीमि सुहृदां हितकामानामिति ॥

तथा च । [12]अनागतविधाता च प्रत्युत्पन्नमतिस्तथा ।
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति ॥ ३१८ ॥

टिट्टिभ आह । कथमेतत् । साब्रवीत् ।

## ॥ कथा १४ ॥

कस्मिंश्चिज्जलाशयेऽनागतविधाता प्रत्युत्पन्नमतिर्यद्भविष्यश्चेति त्र-यो मत्स्याः सन्ति । अथ कदाचित्तं जलाशयं दृष्ट्वागच्छद्भिर्मत्स्य-जीविभिरुक्तं यदहो बहुमत्स्योऽयं ह्रदः कदाचिदपि नास्माभिरन्वे-

१ The middle portion (of the stick) being seized with the teeth. २ At the two ends. ३ The Present is used for the Future. नयथ = नेष्यथः. ४ One who has taken upon him-self the vow of silence. मौनं व्रतं यस्य. ब. ५ By Kambugriva who was going or rather being carried by the two swans. ६ Situated, lying. ७ Having the form of a wheel, some-thing like a wheel. ८ Noise, uproar. ९ Wished or began to say. १० Desirous of saying. The words मनस् or काम are affixed to the infinitives of verbs after dropping the nasal in the sense of "*desirous of*" &c. ११ Being half uttered. १२ अनागतविधाता (he who provides for what is not come, that is, provident) and प्रत्युत्पन्नमति (he who is ready-witted)— these two happily prosper, while यद्भविष्य (he who says what is to happen will happen, that is, a fatalist) perishes. अनागतविधाता=अनागतस्य विधाता. ष. त. प्रत्युत्पन्नमतिः-प्रत्युत्पन्ना मति-र्यस्य. ब. १३ Fishermen. १४ Containing or full of many fishes. ब. १५ A pond, a lake.

षितः । तदद्याहार[1]वृत्तिः संजाता संध्यासमयश्च संभूतस्ततः प्रभाते आगन्तव्यमिति निश्चयः। अतस्तेषां तत्कुलिश[2]पातोपमं वचः समाकर्ण्यानागतविधाता सर्वान्मत्स्यानाहूयेदमूचे । अहो श्रुतं भवद्भिर्यन्मत्स्यजीविभिरभिहितम् । तद्रा[3]त्रावपि किंचिद्गम्यतां सर्माप्वर्ति सरः उक्तं च ।

[4]अशक्तैर्बलिनः शत्रोः कर्तव्यं प्रपलायनम् ।
संश्रितव्योथवा दुर्गो नान्या तेषां गतिर्भवेत् ॥ ३१९ ॥

तन्नून प्रभातसमये मत्स्यजीविनोत्र समागम्य मत्स्यसंक्षयं करिष्यन्ति । एतन्मम मनसि वर्तते । तन्न युक्तं सांप्रतं क्षणमप्यत्रावस्थातुम् । उक्तं च ।

[5]विद्यमाना गतिर्येषामन्यत्रापि सुखावहा ।
ते न पश्यन्ति विद्वांसो देशभङ्गं कुलक्षयम् ॥ ३२० ॥

तदाकर्ण्य प्रत्युत्पन्नमतिः प्राह । अहो सत्यमभिहितं भवता । ममाप्यभी[6]ष्टमेतत् । तदन्यत्र गम्यतामिति । उक्तं च ।

[7]परदेशभयाद्भीता बहुमाया नपुंसकाः ।
स्वदेशे निधनं यान्ति काकाः कापुरुषा मृगाः ॥ ३२१ ॥

[8]यस्यास्ति सर्वत्र गतिः स कस्मा-
त्स्वदेशरागेण हि याति नाशम् ।

---

१ The means of our subsistence न. वृ. २ Resembling the fall or stroke of adamant कुलिशपातेन उपमा यस्य तत्. ब. ३ Even this very night. ४ Those, who are weak, should run away from a powerful enemy or should take shelter in a fort; they have no other alternative. संश्रितव्य: = समाश्रितव्य. ५ Those wise men, who have a safe resort elsewhere, do not see the destruction of their country or family ( by remaining where they are ). सुखावहा—सुखमावहतीति. उप. ६ Desirable, desired. ७ Those, who are very foolish and impotent, and also crows, mean persons and deer, being afraid of the difficulties of a foreign country, die in their own. ८ Why should he, who has access everywhere, bring down destruction upon himself through love for his own country; ( for ) it is the mean who drink salt water saying that the well ( from which they drink ) belongs to their father or is ancestral.

तातस्य कूपोयमिति ब्रुवाणाः
क्षारं जलं कापुरुषाः पिबन्ति ॥ ३२२ ॥

अथ तत्समाकर्ण्य प्रोच्चैर्विहस्य यद्भविष्यः प्रोवाच । अहो न भवद्भ्यां मन्त्रितं सम्यगेतदिति यतः किं वाङ्मात्रेणापि तेषां पितृपैतामहिकमेतत्सरस्त्यक्तुं युज्यते । तद्यद्यायुःक्षयोस्ति तदन्यत्र गतानामपि मृत्युर्भविष्यत्येव । उक्तं च ।

६अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोपि वने विसर्जितः
कृतप्रयत्नोपि गृहे विनश्यति ॥ ३२३ ॥

तदहं न यास्यामि । भवद्भ्यां च यत्प्रतिभाति तत्कार्यम । अथ तस्य तं निश्चयं ज्ञात्वानागतविधाता प्रत्युत्पन्नमतिश्च निष्क्रान्तौ सह परिजनेन । अथ प्रभाते तैर्मत्स्यजीविभिर्जालैस्तज्जलाशयमालोड्य यद्भविष्येण सह जलाशयो निर्मत्स्यतां नीतः । अतोहं ब्रवीम्यनागतविधाता चेति ॥ तच्छ्रुत्वा टिट्टिभ आह । भद्रे किं मां यद्भविष्यसदृशं संभावयिष्यसि । तत्पश्य मे बुद्धिप्रभावं यावदेनं दुष्टसमुद्रं शोषयामि । टिट्टिभ्याह । अहो कस्ते समुद्रेण सह विग्रहः । तन्न युक्तमस्योपरि कोपं कर्तुम । उक्तं च यतः ।

---

१ Very loudly. प्रकर्णन ब्रवे: २ Simply by hearing what they said. ३ Belonging to the father and grandfather, that is, ancestral, hereditary. ४ If our lives are at an end. ५ Will certainly happen. एव has here the force of *surely, as a matter of course.* ६ That which is unprotected stands protected by fate and that which is well-guarded, is destroyed when struck by fate; a person, though deserted in a forest without any help, lives, while one for whom great efforts are made does not live even at home. कृतप्रयत्नः--कृताः प्रयत्नाः यस्य. ब. ७ What appears (proper). ८ तं जलाशयं. कर्म. ९ Having churned or stirred (abs. of the caus. of लुड् 1 P. with आ). १० Rendered fish-less, not a fish was left. ११ How can you wage war with the sea? that is, there is great disparity between you and the sea.

[१]पुंसामसमर्थानामुपद्रवायात्मनो भवेत्कोपः ।
पिठरं क्वथदतिमात्रं निजपार्श्वानेव दहतितराम् ॥ ३२४ ॥
तथा च । [२]अविदित्वात्मनः शक्तिं परस्य च समुत्सुकः ।
गच्छन्नभिमुखो नाशं याति वह्नौ पतङ्गवत् ॥ ३२५ ॥

टिट्टिभ आह । प्रिये मा मैवं वद । येषामुत्साह[३]शक्तिर्भवति ते स्वल्पा अपि गुरूनपि विक्रमन्ते[४] । उक्तं च ।

[५]विशेषात्परिपूर्णस्य याति शत्रोरमर्षणः ।
आभिमुख्यं शशाङ्कस्य यथाद्यापि विधुंतुदः ॥ ३२६ ॥
तथा च । [६]प्रमाणादधिकस्यापि गण्डश्याममदच्युतेः ।
पदं मूर्ध्नि समाधत्ते केसरी मत्तदन्तिनः ॥ ३२७ ॥
तथा च । [७]बालस्यापि रवेः पादाः पतन्त्युपरि भूभृताम् ।
तेजसा सह जातानां वयः कुत्रोपयुज्यते ॥ ३२८ ॥

तदनया चञ्च्वास्य सकलं तोयं शुष्कस्थलतां[८] नयामि । टिट्टिभ्याह । भोः कान्त यत्र जाह्नवी नवनदीशतानि[९] गृहीत्वा नित्यमेव प्रविशति

---

१ The anger of those people who are weak, becomes injurious to their own selves; a pot when it boils excessively burns its own sides all the more (and nothing else). २ This has been already translated. See verse 237. ३ The strength of energy. ४ Conquer, overcome. ५ A passionate man faces an enemy especially when he is full (prepared at all points), just as the demon Rahu ( विधुंतुद ) attacks the full-moon even now. विधुं तुदतीति. उप. He who troubles विधु the moon. शशाङ्क.-शशः अङ्क यस्य. ब. ६ The lion places his foot on the head of an intoxicated elephant from the temples of which brown juice is dropping down, and which is larger in size. गण्डश्याममदच्युतं ought to have been गण्डच्युतश्याममदे. It is an irregular Bahu. Comp. ७ The rays even of the young sun fall on the mountains (the feet even of a young boy fall on the heads of kings). What is the use or need of the age of those who are born with lustre. पाद (1) ray, (2) foot. भूभृत् (1) mountain, (2) king. ८ Shall make it dry ground; shall dry it up. ९ Nine hundred rivers नवनदीशतानि-नदीनां शतानि.

तथा सिन्धुश्च तत्कथं त्वमष्टादशनदीशतैः पूर्यमाणं तं विप्रुषवाहिन्या चञ्च्वा शोषयिष्यसि । तत्किमश्रद्धेयेनोक्तेन । टिट्टिभ आह । प्रिये ।

³अनिर्वेदः श्रियो मूलं चञ्चुर्मे लोहसंनिभा ।
अहोरात्राणि दीर्घाणि समुद्रः किं न शुष्यति ॥ ३२९ ॥

⁴दुरधिगमः परभागो यावत्पुरुषेण पौरुषं न कृतम् ।
जयति तुलामधिरूढो भास्वानपि जलदपटलानि ॥ ३३० ॥

टिट्टिभ्याह । यदि त्वयावश्यं समुद्रेण सह ⁵वैरानुष्ठानं कार्यं तदन्यानपि विहगानाहूय सुहृज्जनसहित एवं समाचर । उक्तं च ।

⁷बहूनामप्यसाराणां समवायो हि दुर्जयः ।
तृणैरावेष्ट्यते रज्जुर्यया नागोऽपि बध्यते ॥ ३३१ ॥

तथा च । ⁸चटकाकाष्ठकूटेन मक्षिकादर्दुरैस्तथा ।
महाजनविरोधेन कुञ्जरः प्रलयं गतः ॥ ३३२ ॥

टिट्टिभ आह । कथमेतत । सा प्राह ।

---

१ Eighteen hundred rivers. २ Carrying only a drop. विप्रुषं वहतीति. ३ Absence of dejection is the root of prosperity ( Cf. the English 'A faint heart never won a fair lady' ), my beak is as hard as iron, will not then the sea be dry ( if I work ) for long days and nights ? लोहसंनिभा. तृ. त. अहोरात्र is usually used in the masculine gender. ४ Superior excellence or merit is difficult to get only so long as a person has not put forth his manly power; even the sun dispels ( lit. conquers ) multitudes of clouds when it enters the sign Libra of the zodiac. The other meaning of तुलामधिरूढ is to be balanced against; when a person is balanced against another, he can easily conquer him. दुरधिगम—दुःखेन अधिगन्तुं शक्यः; परभागः—परभासौ भाग· कृ It is equal to गुणोत्कर्ष. ५ Declaration of open hostility. ६ Accompanied with your friends or relations. ७ The union even of many trifling things is hard to overcome, ( for ) a rope is made up of grass whereby even an elephant is tied. असाराणां understand वस्तूनां. असार—नास्ति सारं यस्मिन्. ब. ८ An elephant was destroyed by the hostility with many people ( creatures ), viz., the sparrow, the wood-pecker, the fly and the frog. Properly speaking the first two padas ought to be चटका-काष्ठकूटाभ्यां and मक्षिकादर्दुराभ्यां respectively.

## ॥ कथा १५ ॥

कस्मिंश्चिद्वनोद्देशे चटकदंपती तमालतरुकृतनिलयौ प्रतिवसतः । अथ गच्छता कालेन संततिरभवत् । अन्यस्मिन्नहनि प्रमत्तो गजः कश्चित्तं तमालवृक्षं घर्मार्तश्छायार्थी समाश्रितः । ततो मदोत्कर्षात्तां तस्य शाखां चटकाक्रान्तां पुष्कराग्रेणाकृष्य बभञ्ज । तस्या भङ्गेन चटकाण्डानि सर्वाणि विशीर्णानि । आयुःशेषतया च चटका कथमपि प्राणैर्न वियुक्ता । अथ साण्डभङ्गाभिभूता प्रलापान्कुर्वाणा न कथंचिदतिष्ठत । अत्रान्तरे तस्यास्तान्प्रलापाञ्श्रुत्वा काष्ठकूटो नाम पक्षी तस्याः परमसुहृत्तद्दुःखदुःखितोऽभ्येत्य तामुवाच । भवति किं वृथा प्रलापेन । उक्तं च ।

[10] नष्टं मृतमतिक्रान्तं नानुशोचन्ति पण्डिताः ।
पण्डितानां च मूर्खाणां विशेषोयं यतः स्मृतः ॥ ३३३ ॥

तथा च । [11] अशोच्यानीह भूतानि यो मूढस्तानि शोचति ।
स दुःखे लभते दुःखं द्वावनर्थौ निषेवते ॥ ३३४ ॥

अन्यच्च । [12] श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ।
तस्मान्न रोदितव्यं हि क्रियाः कार्याः प्रयत्नतः ॥ ३३५ ॥

चटका प्राह । अस्त्वेतत् । परं दुष्टगजेन मदान्मम संतानक्षयः

---

१ Who had made their nests on a Tamála tree. तमालतरौ कृतः निलयः याभ्याम्. ब. २ Progeny, offspring. ३ Desirous of sitting in the shade. ४ Through excess of pride. ५ Occupied or inhabited by the sparrows. ६ Trunk. ७ Hurt, injured, broken. P. P. of शॄ 9 P. with वि. ८ Overcome with sorrow for the loss of her eggs. ९ Never ceased, continued lamenting. १० The wise do not bewail what is lost, what is dead and what is past. This is, therefore, said to be the difference between wise men and fools (who do bewail &c). ११ In this world all created things ( भूतानि ) are not fit to be lamented, and that fool who bewails their loss, gets one calamity in another and thus suffers two. १२ Since the helpless dead person has to eat the phlegmatic tears dropped down ( in weeping ) by the relatives, no one should weep, but perform all the funeral rites with all efforts. १३ The destruction of my offspring.

कृतः । तद्यदि मम त्वं सुहृत्सत्यस्तदस्य गजापसदस्य कोपि वधोपायश्चिन्त्यो यस्यानुष्ठानेन मे संततिनाशदुःखमपसरति । उक्तं च ।

आपदि येनोपकृतं येन च हसितं दशासु चान्त्यासु ।
उपकृत्यपकृत्यपि च तयोर्यस्तं पुरुषं परं मन्ये ॥ ३३६ ॥

काष्ठकूट आह । भवति सत्यमभिहितं भवत्या । उक्तं च ।

स सुहृद्व्यसने यः स्यात्स पुत्रो यस्तु भक्तिमान् ।
स भृत्यो यो विधेयज्ञः सा भार्या यत्र निर्वृतिः ॥ ३३७ ॥

तत्पश्य मे बुद्धिप्रभावम् । परं ममापि सुहृद्भूता वीणारवा नाम मक्षिकास्ति । तन्नामाहूयागच्छामि येन स दुरात्मा दुष्टगजो हन्यते । अथासौ सह चटकया मक्षिकामासाद्य प्रोवाच । भद्रे ममेष्टेयं चटका केनचिद्दुष्टगजेन पराभूताण्डस्फोटनेन । तत्तस्य वधोपायमनुतिष्ठतो मे साहाय्यं कर्तुमर्हसि । मक्षिकाप्याह । भद्र किमुच्यतेऽत्र विषये । उक्तं च ।

---

१ The lowest of elephants. अपसद as a latter part of compounds has the sense of the "lowest," "worst" of &c. २ Grief consequent on the loss of my young ones. ३ Goes away, is removed. ४ I consider that to be the best man who confers benefits on him who has done him good in adversity, and injury to him who has laughed at him in his extreme circumstances. For अन्त्यासु there is another reading as विषमासु. उपकृत and अपकृत Pre. P. from कृ with उप and अप having for their objects तयोः. परं=परमं =श्रेष्ठं. ५ He is a friend in reality who is friendly in need, he is a son who is devoted (to his parents), he is a servant who is obedient (lit. knowing what to do) and she is a wife from whom one gets happiness. स सुहृद् &c. Cf. the English proverb—"A friend in need is a friend indeed." ६ Having the sound of a lute. वीणाया इव रवो यस्याः. ब. ७ Having invited or brought. ८ My friend. ९ Breaking or destroying. १० Doing, carrying out, executing. ११ What more need you say on the subject ?, that is, what you have said is enough to induce me to assist you.

[१]पुनःप्रत्युपकाराय मित्राणां क्रियते प्रियम् ।
यत्पुनर्मित्रमित्रस्य कार्यं मित्रैर्न किं कृतम् ॥ ३३८ ॥

सत्यमेतत् । परं ममापि भेको मेघनादो नाम मित्रं तिष्ठति । तमप्याहूय यथोचितं कुर्मः । उक्तं च ।

[२]हितैः साधुसमाचारैः शास्त्रज्ञैर्मतिशालिभिः ।
कथंचिन्न विकल्पन्ते विद्वद्भिश्चिन्तिता नयाः ॥ ३३९ ॥

अथ ते त्रयोपि गत्वा मेघनादस्याग्रे पूर्वं वृत्तान्तं निवेद्य तस्थुः । अथ स प्रोवाच । [३]कियन्मात्रो गजो वराको महाजनस्य कुपितस्य । तन्मर्दीयो मन्त्रः कर्तव्यः । मक्षिके त्वं गत्वा मध्याह्नसमये तस्य मदोत्कटस्य गजस्य कर्णे वीणारवसदृशं [४]शब्दं कुरु येन श्रवणसुखलालसो [५]निमीलितनयनो भवति । ततश्च काष्ठकूटचञ्च्वा स्फोटितनयनोन्धीभूतस्तृषार्तो मम [६]गर्ततटाश्रितस्य [७]सपरिकरस्य शब्दं श्रुत्वा जलाशयं मत्वाभ्येति । ततो गर्तमासाद्य पतिष्यति पञ्चत्वं [८]यास्यति चेति । एवं [९]समवायः कर्तव्यो यथा वैरसाधनं [१०]भवति । अथ तथानुष्ठिते स मत्तगजो मक्षिकागेय[११]श्रवणसुखान्निमीलितनयनः पश्चात्काष्ठकूटहृत[१२]चक्षुर्मध्याह्नसमये भ्राम्यन्मण्डूकशब्दानुसारी गच्छन्महतीं गर्तामासाद्य पतितो मृतश्च ॥ अतोहं ब्रवीमि चटकाकाष्ठकूटेनेति ।

---

१ Any good is done to friends for an obligation in return; that business which is done for the friend of a friend-is that not said to be done by friends? २ The plans designed in consultation with friends of good conduct, versed in Shastras, endowed with talent and learned, do not change, or, are safe साधुसमाचार साधु समाचारः यस्य. ब. शालिन as a latter part of compounds means endowed with or possessed of. ३ Of what account is a poor elephant to many creatures got angry? that is, they can easily defeat him. ४ Resembling the sound of a lute. ५ Ardently desirous of the pleasure of the ear. ष. त. ६ A hollow; a hole. ७ Accompanied with my retinue. परिकरेण सहितस्य. ब. ८ Will die. पञ्चत्वं या or गम् means to separate into the five elements, and thus to die. ९ Union. १० Revenge will be taken or accomplished. ११ Hearing the song of the fly. १२ Whose eyes were taken out by the wood-pecker.

टिट्टिभ आह । भद्र एवं भवतु । सुहृद्वर्गसमुदायेन[1] समुद्रं शोषयिष्यामीति निश्चित्य बकसारसमयूरादीन्समाहूय प्रोवाच । भोः पराभूतोहं समुद्रेणाण्डकापहारेण तच्चिन्त्यतामस्य शोषणोपायः ते संमन्त्र्य प्रोचुः । अशक्ता[2] वयं समुद्रशोषणे तत्किं वृथा प्रयासेन । उक्तं च ।

[3] अबलः प्रोन्नतं शत्रुं यो याति मदमोहितः ।
युद्धार्थं स निवर्तेत शीर्णदन्तो गजो यथा ॥ ३५० ॥

तदस्माकं स्वामी वैनतेयोस्ति । तत्तस्मै सर्वमेतत्परिभवस्थानं[4] निवेद्यते येन स्वजातिपरिभवकुपितो वैरानृण्यं[5] गच्छति । अथवात्रावलेपं[6] करिष्यति तथापि नास्ति वो दुःखम् । उक्तं च ।

[7] सुहृदि निरन्तरचित्ते गुणवति भृत्येनुवर्तिनि कलत्रे ।
स्वामिनि शक्तिसमेते निवेद्य दुःखं सुखीभवति ॥ ३५१ ॥

[8] तथामो वैनतेयसकाशं यतोसावस्माकं स्वामी । तथानुष्ठिते सर्वे ते पक्षिणो विवर्णवदना बाष्पपूरितदृशो[9] वैनतेयसकाशमुपेत्य करुणस्वरेण फूत्कर्तुमारब्धाः । अहो अब्रह्मण्यमब्रह्मण्यम[10] । अधुना सदाचारस्य टिट्टिभस्य भवति[11] नाथे सति समुद्रेणाण्डान्यपहृतानि । तत्प्रनष्टमधुना पक्षिकुलम । अन्येपि स्वेच्छया समुद्रेण व्यापादयिष्यन्ते । उक्तं च ।

---

१ With a multitude of friends &c. २ We are unable to dry up the sea. ३ That weak person who through folly attacks a powerful enemy, will come back ( shorn of his pride like an elephant &c. ). ४ Let us report all this humiliation to him. ५ Will avenge the injury (lit. will be free from the debt of enmity &c. ). ६ Or if he should show himself too proud to sympathize with us. ७ A man becomes happy by communicating the cause of his grief to a friend whose heart is the same with his ( an intimate friend ), to a meritorious servant, obedient wife and a master who is able. निरंतरचित्ते-निरंतरं चित्तं यस्य तस्मिन्. ब. ८ So let us go. ९ With the eyes filled with tears. बाष्पैः पूरिता दृशो येषां ते. १० Alas ! alas ! god forbid ! ११ Your honour being the lord or king.

¹एकस्य कर्म संवीक्ष्य करोत्यन्योपि गर्हितम् ।
गतानुगतिको लोको न लोकः पारमार्थिकः ॥ ३४२ ॥

तथा च । ²चाटतस्करदुर्वृत्तैस्तथा साहसिकादिभिः ।
पीड्यमानाः प्रजा रक्ष्याः कूटच्छद्मादिभिस्तथा ॥ ३४३ ॥

³प्रजानां धर्मषड्भागो राज्ञो भवति रक्षितुः ।
अधर्मादपि षड्भागो जायते यो न रक्षति ॥ ३४४ ॥

⁴प्रजापीडनसंतापात्समुद्भूतो हुताशनः ।
राज्ञः श्रियं कुलं प्राणान्नादग्ध्वा विनिवर्तते ॥ ३४५ ॥

⁵राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषाम् ।
राजा पिता च माता च सर्वेषां न्यायवर्तिनाम् ॥ ३४६ ॥

⁶फलार्थी पार्थिवो लोकान्पालयेद्यत्नमास्थितः ।
दानमानादितोयेन मालाकारोऽङ्कुरानिव ॥ ३४७ ॥

⁷यथा बीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिरक्षितः ।
फलप्रदो भवेत्काले तद्वल्लोकः सुरक्षितः ॥ ३४८ ॥

---

१ Having seen a censurable action done by one man, another does it; people are blind followers of customs and not the lovers of truth. गतानुगतिक = गतं अनुगच्छतीति following the bygones. पारमार्थिक adj. from परमार्थ the highest truth. २ Subjects should be protected from being persecuted by cheats, thieves, ill-behaved persons, adventurers and also by means of falsehood and other things. कूटच्छद्मनी आदिनी येषां ते ब. ३ A king who protects his subjects, gets one-sixth part of their religious merits; he also gets one-sixth part of their irreligion when he does not protect them. षड्भाग := षष्ठः भागः क. Instead of अधर्मादपि one would have expected अधर्मस्यापि. ४ The fire arising from the pain of the oppression of the subjects, does not return (become cool) without burning the wealth, family and life of the king. संताप also means heat, fire. ५ A king is the brother of the brotherless, and eye of the eyeless; a king is the father and mother of all those who act justly. अबंधु and अचक्षुस् are ब. न्यायेन वर्तते इति. उप. ६ This verse is nearly the same as 220. ७ This is exactly equal to verse 223.

[१]हिरण्यधान्यरत्नानि यानानि विविधानि च ।
तथान्यदपि यत्किंचित्प्रजाभ्यः स्यान्नृपस्य तत् ॥ ३४९ ॥

अथैवं गरुडः समाकर्ण्य तद्दुःखदुःखितः कोपाविष्टश्च व्यचिन्तयत् । सत्यमुक्तमेतैः पक्षिभिः । अहो तदद्य गत्वा तं समुद्रं शोषयामः[२] । एवं चिन्तयतस्तस्य विष्णुदूतः समागत्याह । भो गरुत्मन्भगवता नारायणेनाहं तव[३] पार्श्वे प्रेषितः । देवकार्येण[४] श्रीभगवानमरावत्यां यास्यतीति । तत्सत्वरमागम्यताम् । तच्छ्रुत्वा गरुडः साभिमानं[५] प्राह । भो दूत किं मया कुभृत्येन भगवान्करिष्यति । तद्गत्वा तं वद यदन्यो भृत्यो वाहनायास्मत्स्थाने[६] क्रियताम् । [७]मदीयो नमस्कारो वाच्यो भगवतः । उक्तं च ।

[८]यो न वेत्ति गुणान्यस्य न तं सेवेत पण्डितः ।
न हि तस्मात्फलं किंचित्सुकृष्टादूषरादिव ॥ ३५० ॥

दूत आह । भो वैनतेय कदाचिदपि भगवन्तं प्रति त्वया नैतदभिहितमीदृक् । तत्कथय किं ते भगवतापमानस्थानं[९] कृतम् । गरुड आह । भगवदाश्रयभूतेन[१०] समुद्रेणास्मट्टिट्टिभाण्डान्यपहृतानि । तद्यदि निग्रहं[११] न करोति तदहं भगवतो न भृत्य इत्येष निश्चयस्त्वया वाच्यः । तद्द्रुततरं गत्वा भवता भगवतः समीपे गन्तव्यम् । अथ दूतमुखेन प्रणयकुपितं[१२] वैनतेयं विज्ञाय भगवांश्चिन्तयामास । अहो स्थाने[१३] कोपो वैनतेयस्य । तत्स्वयमेव गत्वा संमानपुरःसरं तमानयामि । उक्तं च ।

[१४]भक्तं शक्तं कुलीनं च न भृत्यमपमानयेत ।
पुत्रवल्लालयेन्नित्यं य इच्छेच्छ्रेय आत्मनः ॥ ३५१ ॥

---

१ This is nearly equal to 221. २ Let us dry; we shall dry. ३ Have been sent to you. ४ On an errand of the gods. ५ With pride or egotism. अभिमानेन सह यथा तथा. अव्य. ६ Be appointed in my place. ७ Let my humble respects be paid to the god? Give him my respects. ८ This verse is nearly equal to 47. ९ The place or object of insult or disrespect; cause of disrespect. १० Being a sheltering place, that is, the vehicle or seat of &c. ११ Punishment or chastisement. १२ Angry through love or affection. १३ In the proper place; right, just. १४ He, who wishes for his own welfare, should never disrespect a servant who is devoted, able and nobly-born, but should treat him affectionately like a son.

१एकस्य कर्म संवीक्ष्य करोत्यन्योपि गर्हितम् ।
गतानुगतिको लोको न लोकः पारमार्थिकः ॥ ३४२ ॥

तथा च । २चाटतस्करदुर्वृत्तैस्तथा साहसिकादिभिः ।
पीड्यमानाः प्रजा रक्ष्याः कूटच्छद्मादिभिस्तथा ॥३४३॥

३प्रजानां धर्मषड्भागो राज्ञो भवति रक्षितुः ।
अधर्मादपि षड्भागो जायते यो न रक्षति ॥ ३४४ ॥

४प्रजापीडनसंतापात्समुद्भूतो हुताशनः ।
राज्ञः श्रियं कुलं प्राणान्नादग्ध्वा विनिवर्तते ॥ ३४५ ॥

५राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषाम् ।
राजा पिता च माता च सर्वेषां न्यायवर्तिनाम् ॥ ३४६ ॥

६फलार्थी पार्थिवो लोकान्पालयेद्यत्नमास्थितः ।
दानमानादितोयेन मालाकारोऽङ्कुरानिव ॥ ३४७ ॥

७यथा बीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिरक्षितः ।
फलप्रदो भवेत्काले तद्वल्लोकः सुरक्षितः ॥ ३४८ ॥

---

१ Having seen a censurable action done by one man, another does it ; people are blind followers of customs and not the lovers of truth. गतानुगतिक = गतं अनुगच्छतीति following the bygones. पारमार्थिक adj. from परमार्थ the highest truth. २ Subjects should be protected from being persecuted by cheats, thieves, ill-behaved persons, adventurers and also by means of falsehood and other things. कूटच्छद्मानि आदिनी येषां तैः ब. ३ A king who protects his subjects, gets one-sixth part of their religious merits ; he also gets one-sixth part of their irreligion when he does not protect them. षड्भाग := षष्ठः भागः क. Instead of अधर्मादपि one would have expected अधर्मस्यापि. ४ The fire arising from the pain of the oppression of the subjects, does not return ( become cool ) without burning the wealth, family and life of the king. संताप also means heat, fire. ५ A king is the brother of the brotherless, and eye of the eyeless ; a king is the father and mother of all those who act justly. अबंधु and अचक्षुस् are ब. न्यायेन वर्तते इति. उप. ६ This verse is nearly the same as 220. ७ This is exactly equal to verse 223.

[1]हिरण्यधान्यरत्नानि यानानि विविधानि च ।
तथान्यदपि यत्किंचित्प्रजाभ्यः स्यान्नृपस्य तत् ॥ ३४९ ॥

अथैवं गरुडः समाकर्ण्य तद्दुःखदुःखितः कोपाविष्टश्च व्यचिन्तयत् । सत्यमुक्तमेतैः पक्षिभिः । अहो तदद्य गत्वा तं समुद्रं शोषयामः[2] । एवं चिन्तयतस्तस्य विष्णुदूतः समागत्याह । भो गरुत्मन्भगवता नारायणेनाहं तव[3] पार्श्वे प्रेषितः । देवकार्येण[4] श्रीभगवानमरावत्यां यास्यतीति । तत्सत्वरमागम्यताम् । तच्छ्रुत्वा गरुडः साभिमानं[5] प्राह । भो दूत किं मया कुभृत्येन भगवान्करिष्यति । तद्गत्वा तं वद यदन्यो भृत्यो वाहनायास्मत्स्थाने[6] क्रियताम् । मदीयो नमस्कारो वाच्यो[7] भगवतः । उक्तं च ।

[8]यो न वेत्ति गुणानस्य न तं सेवेत पण्डितः ।
न हि तस्मात्फलं किंचित्सुकृष्टादूषरादिव ॥ ३५० ॥

दूत आह । भो वैनतेय कदाचिदपि भगवन्तं प्रति त्वया नैतदभिहितमीदृक् । तत्कथय किं ते भगवतापमानस्थानं[9] कृतम् । गरुड आह । भगवदाश्रयभूतेन[10] समुद्रेणास्मट्टिट्टिभाण्डान्यपहृतानि । तद्यदि निग्रहं[11] न करोति तदहं भगवतो न भृत्य इत्येष निश्चयस्त्वया वाच्यः । तद्द्रुततरं गत्वा भवता भगवतः समीपे गन्तव्यम् । अथ दूतमुखेन प्रणयकुपितं[12] वैनतेयं विज्ञाय भगवांश्चिन्तयामास । अहो स्थाने[13] कोपो वैनतेयस्य । तत्स्वयमेव गत्वा संमानपुरःसरं तमानयामि । उक्तं च ।

[14]भक्तं शक्तं कुलीनं च न भृत्यमपमानयेत् ।
पुत्रवल्लालयेन्नित्यं य इच्छेच्छ्रेय आत्मनः ॥ ३५१ ॥

---

१ This is nearly equal to 221. २ Let us dry; we shall dry. ३ Have been sent to you. ४ On an errand of the gods. ५ With pride or egotism. अभिमानेन सह यथा तथा. अव्य. ६ Be appointed in my place. ७ Let my humble respects be paid to the god? Give him my respects. ८ This verse is nearly equal to 47. ९ The place or object of insult or disrespect; cause of disrespect. १० Being a sheltering place, that is, the vehicle or seat of &c. ११ Punishment or chastisement. १२ Angry through love or affection. १३ In the proper place; right, just. १४ He, who wishes for his own welfare, should never disrespect a servant who is devoted, able and nobly-born, but should treat him affectionately like a son.

अन्यच्च । राजा तुष्टोपि भृत्यानामर्थमात्रं प्रयच्छति ।
ते तु संमानमात्रेण प्राणैरप्युपकुर्वते ॥ ३५२ ॥

इत्येवं संप्रधार्य रुक्मपुरे वैनतेयसकाशं सत्वरमगमत् । वैनतेयोपि गृहागतं भगवन्तमवलोक्य त्रपाधोमुखः प्रणम्योवाच । भगवन् त्वदाश्रयोन्मत्तेन समुद्रेण मम भृत्यस्याण्डान्यपहृत्य तेपमानस्थानं कृतम् । परं युष्मल्लज्जयाहं तं स्थलतां न नयामीति यतः स्वामिभयाच्छुनोपि प्रहारो न दीयते । उक्तं च ।

येन स्याल्लघुता वाथ पीडा चित्ते प्रभोः क्वचित् ।
प्राणत्यागेपि तत्कर्म न कुर्यात्कुलसेवकः ॥ ३५३ ॥

तच्छ्रुत्वा भगवानाह । भो वैनतेय सत्यमभिहितं भवता । उक्तं च ।

भृत्यापराधजो दण्डः स्वामिनो जायते यतः ।
तेन लज्जापि तस्योत्था न भृत्यस्य तथा पुनः ॥ ३५४ ॥

तदागच्छ येनाण्डानि समुद्रादादाय टिट्टिभं संभावयावोमरावतीं च गच्छावः । तथानुष्ठिते समुद्रो भगवता निर्भर्त्स्याग्नेयं शरं संधायाभिहितः । भो दुरात्मन्दीयन्तां टिट्टिभाण्डानि नो चेत्स्थलतां त्वां नयामि । ततः समुद्रेण सभयेन टिट्टिभाण्डानि तानि प्रदत्तानि टिट्टिभेनापि भार्यायै समर्पितानि ।

अतोहं ब्रवीमि शत्रोर्बलमविज्ञायेति ।

तस्मात्पुरुषेणोद्यमो न त्याज्यः । तदाकर्ण्य संजीवकस्तमेव भूयोपि पप्रच्छ । भो मित्र कथं ज्ञेयो मयासौ दुष्टबुद्धिरिति । इयन्तं कालं

१ This verse is equal to 83. २ With the head hung down through shame. ३ Intoxicated or grown insolent by the fact of his being your seat or abode. ४ Through fear of bringing shame upon you. ५ One who is a hereditary servant, should not do that action, which will detract from the merit, or cause pain to the mind of the master, even though he ( servant ) be at the point of death. ६ Since punishment is awarded to a master for the the offences of his servant, the shame thereof should also be his and not of the servant. तस्योत्था = भृत्योत्था - भृत्यात् उत्था proceeding from the actions of the servant. ७ Being scolded or taken to task. ८ Belonging to or presided over by fire. ९ Having aimed. १० Industry, effort. ११ Up to this time.

त्तरोत्तरस्नेहेन प्रसादेन चाहं दृष्टो न कदाचित्तद्विकृतिर्दृष्टा । प्यतां येनाहमात्मरक्षार्थं तद्विधाय च यते । दमनक आह । भद्र म ज्ञेयम् । एष ते प्रत्ययः । यदि रक्तनेत्रस्त्रिशिखां भ्रूकुटिं दधा- सृक्किणी परिलेलिहत्त्वां दृष्ट्वा भवति तद्दुष्टबुद्धिरन्यथा सुप्रसादे- । तदाशापय माम् । स्वाश्रयं प्रति गच्छामि । त्वया च यथायं भेदो न भवति तथा कार्यम् यदि निशामुखं प्राप्य गन्तुं शक्नोषि त्याग: कार्यः । यतः ।

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थ आत्मार्थे पृथिवीं त्यजेत् ॥ ३५५ ॥

आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ ३५६ ॥

बलवताभिभूतस्य विदेशगमनं तदनुप्रवेशो वा नीतिः। तद्देशत्यागः कार्यः । अथवात्मा सामादिभिरुपायैरभिरक्षणीयः । उक्तं च ।

अपि पुत्रकलत्रैर्वा प्राणान्रक्षेत पण्डितः ।
विद्यमानैर्यतस्तैः स्यात्सर्वं भूयोपि देहिनाम् ॥ ३५७ ॥

---

१ I have been treated with increasing affection and favour. २ Seen, found (by me). ३ With red eyes. रक्ते नेत्रे यस्य स . ब. ४ Contracting his eye-brows into three wrinkles (as a sign of anger). ५ Well-pleased. ६ Evening (lit. the face of the night). ७ One should sacrifice one individual for the good of the family, the family for the sake of the village, and the village for the good of the country, and the whole earth for one's own sake. ८ One should save wealth against the time of difficulty, save the life of the wife, even at the sacrifice of wealth, and should always save himself even at the sacrifice of both wife and wealth. ९ It is a politic step that when a man is defeated by a powerful person, he should either go to a foreign country or accommodate himself to his whims and thus gain him over. १० A wise man should save his life even at the sacrifice of his son and wife, since it (life) being in existence, men will again obtain every thing (lost before).

तथा च । [१]येन केनाप्युपायेन शुभेनाप्यशुभेन वा ।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥ ३५८
[२]यो मायां कुरुते मूढः प्राणत्यागे धनादिके ।
तस्य प्राणाः प्रणश्यन्ति तैर्नष्टैर्नष्टमेव तत् ॥ ३५९ ॥

एवमभिधाय दमनकः करटकसकाशमगमत् । करटकोपि तमायान्तं दृष्ट्वा प्रोवाच । भद्र किं कृतं तत्र भवता । दमनक आह । मया तावन्नीतिबीजनिर्वापणं कृतं परतो दैवविहितायत्तम् । उक्तं च यतः ।

[५]पराङ्मुखेपि दैवेत्र कृत्यं कार्यं विपश्चिता ।
आत्मदोषविनाशाय स्वचित्तस्तम्भनाय च ॥ ३६० ॥
तथा च । [६]उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
र्दैवं हि दैवमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोत्र दोषः ॥ ३६१ ॥

---

१ By any remedy whatever, either fair or foul, one should save his poor soul, (for) one who is prosperous can be virtuous. २ That fool who uses tricks &c. to preserve his wealth and other things at the time of death, loses his life and that (life) being lost, everything else is (of course) lost. तैर्नष्टैः --Is an example of the Instrumental absolute in Sanskrit. ३ The sowing of the seeds of policy. ४ Everything further depends on the will of Fate. दैवविहित=दैवविधान or विधि-what is ordained by Fate. दैवविहिते आयत्तम्. स. ५ Even though destiny be adverse, a wise man should do his duty here, to prevent any blame being attached to himself, and to stop the yearning of his heart. आत्मदोष would be blame at the hands of others if he be idle, and स्वचित्तस्तंभन-stopping the heart, *i. e.*, the desire of the heart. ६ The goddess of wealth resorts to that excellent man who is industrious; it is the cowardly that say that Fate is fate; that is, that which is destined to happen, will happen; having put down fate, put forth your manly power to the best of your abilities; if any thing does not succeed when efforts are made for its accomplishment, what fault is there ?, *i. e.* we are not to blame. पुरुषसिंह—पुरुषः सिंह इव. क.

करटक आह । तत्कथय कीदृक्त्वया नीतिबीजं निर्वापितम् । सो-
। मयाऽन्योन्यं ताभ्यां मिथ्याप्रजल्पनेन भेदस्तथा विहितो
भूयोपि मन्त्रयन्तावेकस्थानस्थितौ न पश्यसि । करटक आह ।
न युक्तं भवता विहितं यत्परस्परं तौ स्नेहार्द्रहृदयौ सुखाश्रयौ
सागरे प्रक्षिप्तौ । उक्तं च ।

अविरुद्धं सुखस्थं यो दुःखमार्गे नियोजयेत् ।
जन्मजन्मान्तरे दुःखी स नरः स्यादसंशयम् ॥ ३६२ ॥

अपरं त्वं यद्भेदमात्रेणापि तुष्टस्तदप्ययुक्तं यतः सर्वोपि जनो वि-
करणे समर्थो भवति नोपकर्तुम् । उक्तं च ।

घातयितुमेव नीचः परकार्यं वेत्ति न प्रसाधयितुम् ।
पातयितुमेव शक्तिर्नाखोरुद्धर्तुमन्नपिटम् ॥ ३६३ ॥

दमनक आह । अनभिज्ञो भवान्नीतिशास्त्रस्य तेनैतद्ब्रवीषि ।
उक्तं च यतः ।

जातमात्रं न यः शत्रुं व्याधिं च प्रशमं नयेत् ।
महाबलोपि तेनैव वृद्धिं प्राप्य स हन्यते ॥ ३६४ ॥

तच्छत्रुभूतोयमस्माकं मन्त्रिपदापहरणात् । उक्तं च ।

---

१ Has reference to भेद. २ By making false statements to them. ३ Breach, rupture. ४ That you will not see them in one place consulting with each other. ५ Friendly disposed towards each other. ६ Living in happiness. ७ There is no doubt that the man, who directs to a path of misery a man who is not against any body and is in happiness, will be miserable in every birth or existence. सुखस्थं = सुखं तिष्ठतीति. उप. जन्मजन्मान्तरे = in this and another birth. अस्मिन् जन्मनि अन्यस्मिंश्च. ८ Satisfied with merely having brought about a rupture between them. ९ In doing what is evil or undesirable. १० A wicked person knows only how to spoil other's business and not to accomplish it; a mouse has strength only to throw down a basket of food and not to lift it up. ११ See verse 233. १२ He has become our enemy by having usurped the post of minister.

¹पितृपैतामहं स्थानं यो यस्यात्र जिगीषते।
स तस्य सहजः शत्रुरुच्छेद्योपि प्रिये स्थितः ॥ ३६५ ॥

तन्मया स उदासीनतया समानीतोभयप्रदानेन यावत्तावदहमपि तेन साचिव्यात्प्रच्याावितः । अथवा साध्विदमुच्यते ।

⁵देयात्साधुर्यदि निजपदे दुर्जनाय प्रवेशं
तन्नाशाय प्रभवति ततो वाञ्छमानः स्वयं सः ।
तस्माद्देयो विपुलमतिभिर्नावकाशोधमानां
जारोपि स्याद्गृहपतिरिति श्रूयते वाक्यतोत्र ॥ ३६६ ॥

तेन मया तस्योपरि वधोपाय एष विरच्यते । ⁷देशत्यागाय वा भविष्यति । तच्च त्वां मुक्त्वान्यो न ज्ञास्यति । ⁸तद्युक्तमेतत्स्वार्थायानुष्ठितम् । उक्तं च यतः ।

⁸निस्त्रिंशं हृदयं कृत्वा वाणीं चेक्षुरसोपमाम् ।
दुःखं तत्र न कर्तव्यं हन्यात्तत्रापकारिणम् ॥ ३६७ ॥

---

१ He, who wishes to deprive a person of a post which is hereditary, is his natural enemy and should be destroyed though he be kindly disposed towards him. जिगीषते desid. of जि 1 P. to conquer. उच्छेद्योपि &c. construe स. प्रिये स्थितोपि उच्छेद्य. २ Indifferently; disinterestedly. ३ As soon as &c. ४ Deprived of counsellorship. प्रच्यावित P. P. of the caus. of च्यु 1 A. ५ If a good man allow a wicked person access to his own post, he becomes himself able to destroy him, if he wish to do so; therefore, those who are possessed of great talents should give no access to the mean; it is heard from popular saying that even a paramour will be the master of a house. वाक्यतः from words, i. e. popular saying. ६ Is designed; planned. ७ ( What I have done ) will result in his leaving the country. ८ Having made the heart relentless and the speech as sweet as sugar-cane juice, no sorrow should be felt and an evil-doer should be killed: तत्र- in that case ( where one can serve his purpose by destroying his enemy ).

अपरं मृतोप्यस्माकं भोज्यो भविष्यति । तदेकं तावद्वैरसाधनम् । परं साचिव्यं च भविष्यति तृप्तिश्चेति । तद्गुणत्रयेस्मिन्नुपस्थिते कस्मान्मां दूषयसि त्वं जाड्यभावात् । उक्तं च ।

परस्य पीडनं कुर्वन्स्वार्थसिद्धिं च पण्डितः ।
मूढबुद्धिर्न भक्षेत वने चतुरको यथा ॥ ३६८ ॥

करटक आह । कथमेतत् । स आह ।

## ॥ कथा १६ ॥

अस्ति कस्मिंश्चिद्वनोद्देशे वज्रदंष्ट्रो नाम सिंहः । तस्य चतुरकक्रव्यमुखनामानौ शृगालवृकौ सदानुगतौ तत्रैव प्रतिवसतः । अथान्यदिने सिंहेन कदाचिदासन्नप्रसवा प्रसववेदनया स्वयूथाद्भ्रष्टोष्ट्र्युपविष्टा कस्मिंश्चिद्वनोद्देशे समासादिता । अथ तां व्यापाद्य यावदुदरं स्फाटयति तावज्जीवँल्लघुदासेरकशिशुर्निष्क्रान्तः । सिंहोपि दासेरक्याः पिशितेन सपरिवारः परां तृप्तिमुपागतः परं स्नेहात्स दासेरकं गृहमानीयेदमुवाच । भद्र न तेस्ति मृत्योर्भयं मत्तो नान्यस्मादपि । ततः स्वेच्छयात्र वने भ्रम्यतामिति । यतस्ते शङ्कुसदृशौ कर्णावतः शङ्कुकर्णो नाम भविष्यसि । एवमनुष्ठिते चत्वारोपि त एकस्थाने विहारिणः परस्परमनेकप्रकारैर्गोष्ठीसुखमनुभवन्तास्तिष्ठन्ति । शङ्कु-

---

१ The accomplishing of revenge. २ When three such advantages are before us. ३ Through stupidity. ४ A wise person whose intellect is confused will not eat, if by so doing he can oppress his enemy and accomplish his own end, as was done by Chaturaka in the forest. ५ Having jaws of adamant, that is, jaws as hard as &c. ६ Being always in attendance. ७ Being near her confinement; about to be confined. ८ By the pangs of delivery. ९ Break open. (Caus. of स्फट् 6 P.) १० A young one of camel. दासेरक एव शिशुः. क. ११ The she-camel. १२ Resembling a cone. १३ Enjoying the pleasure of conversation on various subjects.

[1]पितृपैतामहं स्थानं यो यस्यात्र जिगीषते ।
स तस्य सहजः शत्रुरुच्छेद्योपि प्रिये स्थितः[2] ॥ ३६५ ॥

तन्मया स उदासीनतया[2] समानीतोभयप्रदानेन यावत्[3]तावदहमपि तेन साचिव्यात्[4]प्रच्यावितः । अथवा साध्विदमुच्यते ।

[5]दद्यात्साधुर्यदि निजपदे दुर्जनाय प्रवेशं
तन्नाशाय प्रभवति ततो वाञ्छमानः स्वयं सः ।
तस्माद्देयो विपुलमतिभिर्नावकाशोधमानां
जारोपि स्याद्गृहपतिरिति श्रूयते वाक्यतोत्र ॥ ३६६ ॥

तेन मया तस्योपरि वधोपाय एष विरच्यते[6] । [7]देशत्यागाय वा भविष्यति । तत्र त्वां मुक्त्वान्यो न ज्ञास्यति । [8]तद्युक्तमेतत्स्वार्थायानुष्ठितम् । उक्तं च यतः ।

[8]निस्त्रिंशं हृदयं कृत्वा वाणीं चेक्षुरसोपमाम् ।
दुःखं तत्र न कर्तव्यं हन्यात्तत्रापकारिणम् ॥ ३६७ ॥

---

१ He, who wishes to deprive a person of a post which is hereditary, is his natural enemy and should be destroyed though he be kindly disposed towards him. जिगीषते desid. of जि 1 P. to conquer. उच्छेद्योपि &c. construe स. प्रिये स्थितोपि उच्छेद्यः २ Indifferently; disinterestedly. ३ As soon as &c. ४ Deprived of counsellorship. प्रच्यावित P. P. of the caus. of च्यु 1 A. ५ If a good man allow a wicked person access to his own post, he becomes himself able to destroy him, if he wish to do so; therefore, those who are possessed of great talents should give no access to the mean; it is heard from popular saying that even a paramour will be the master of a house. वाक्यतः from words, *i. e.* popular saying. ६ Is designed; planned. ७ ( What I have done ) will result in his leaving the country. ८ Having made the heart relentless and the speech as sweet as sugar-cane juice, no sorrow should be felt and an evil-doer should be killed: तत्र in that case ( where one can serve his purpose by destroying his enemy ).

अपरं मृतोप्यस्माकं भोज्यो भविष्यति । तदेकं तावद्वैरसाधनम्[1] । परं साचिव्यं च भविष्यति तृप्तिश्चेति । तद्गुणत्रयेस्मिन्नुपस्थिते[2] कल्याणं दूषयसि त्वं जाड्यभावात्[3] । उक्तं च ।

परस्य[4] पीडनं कुर्वन्स्वार्थसिद्धिं च पण्डितः ।
मूढबुद्धिर्न भक्षेत वने चतुरको यथा ॥ ३६८ ॥

करटक आह । कथमेतत् । स आह ।

## ॥ कथा १६ ॥

अस्ति कस्मिंश्चिद्वनोद्देशे वज्रदंष्ट्रो[5] नाम सिंहः । तस्य चतुरकक्रव्यमुखनामानौ शृगालवृकौ सदानुगतौ[6] तत्रैव प्रतिवसतः । अथान्यदिने सिंहेन कदाचिदासन्नप्रसवा[7] प्रसववेदनया[8] स्वयूथाद्भ्रष्टोष्ट्रयुपविष्टा कस्मिंश्चिद्वनोद्देशे समासादिता । अथ तां व्यापाद्य यावदुदरं स्फोटयति[9] तावज्जीवँल्लघुदासेरकशिशुर्[10] निष्क्रान्तः । सिंहोपि दासेर्याः[11] पिशितेन सपरिवारः परां तृप्तिमुपागतः परं स्नेहात्स दासेरकं गृहमानीयेदमुवाच । भद्र न तेस्ति मृत्योर्भयं मत्तो नान्यस्मादपि । ततः स्वेच्छयात्र वने भ्रम्यतामिति । यतस्ते शङ्कुसदृशौ[12] कर्णौ ततः शङ्कुकर्णो नाम भविष्यसि । एवमनुष्ठिते चत्वारोपि त एकस्थाने विहारिणः परस्परमनेकप्रकारगोष्ठीसुखमनुभवन्तस्तिष्ठन्ति[13] । शङ्कु-

---

१ The accomplishing of revenge. २ When three such advantages are before us. ३ Through stupidity. ४ A wise person whose intellect is confused will not eat, if by so doing he can oppress his enemy and accomplish his own end, as was done by Chaturaka in the forest. ५ Having jaws of adamant, that is, jaws as hard as &c. ६ Being always in attendance. ७ Being near her confinement; about to be confined. ८ By the pangs of delivery. ९ Break open. (Caus. of स्फुट् 6 P.) १० A young one of camel. दासेरक एव शिशुः. क. ११ The she-camel. १२ Resembling a cone. १३ Enjoying the pleasure of conversation on various subjects.

कर्णोपि यौवनपदवीमारूढः[1] क्षणमपि न तं सिंहं मुञ्चति । अथ कदाचिद्वज्रदंष्ट्रस्य केनचिद्वन्येन[2] मत्तगजेन सह युद्धमभवत् । तेन मदवीर्यात्स दन्तप्रहारैस्तथा क्षतशरीरो विहितो[3] यथा प्रचलितुं न शक्नोति । तत्क्षुत्क्षामस्तान्प्रोवाच । भो भवन्तः । अन्विष्यतां किंचित्सत्त्वं येनाहमेवंस्थितोपि तद्व्यापाद्यात्मनो युष्माकं च क्षुत्प्रणाशं[4] करोमि । तच्छ्रुत्वा ते त्रयोपि वने संध्याकालं यावद्भ्रान्ताः परं न किंचित्सत्त्वमासादितम् । अथ चतुरकश्चिन्तयामास । यदि शङ्कुकर्णोयं व्यापाद्यते ततः सर्वेषां कतिचिद्दिनानि तृप्तिर्भवति परं नैमं स्वामी मित्रत्वादाश्रयसमाश्रितत्वाच्च[5] विनाशयिष्यति । अथवा बुद्धिप्रभावेण स्वामिनं प्रतिबोध्य तथा करिष्ये यथा व्यापादयिष्यति । उक्तं च ।

[6]अवध्यं चाथवागम्यमकृत्यं नास्ति किंचन ।
लोके बुद्धिमतां बुद्धेस्तस्मात्तां विनियोजयेत् ॥ ३६९ ॥

एवं विचिन्त्य शङ्कुकर्णमिदमाह । भोः शङ्कुकर्ण स्वामी तावत्पथ्यं विना क्षुधया पीड्यते । स्वाम्यभावादस्माकमपि ध्रुवं विनाश एव । ततो वाक्यं किंचित्स्वाम्यर्थे वदिष्यामि[7] । तच्छ्रूयताम् । शङ्कुकर्ण आह । भोः शीघ्रं निवेद्यतां येन ते वचनं शीघ्रं निर्विकल्पं[8] करोमि । अपरं स्वामिनो हिते कृते[9] मया सुकृतशतं[10] कृतं भविष्यति । अथ चतुरक आह । भो भद्र आत्मशरीरं द्विगुणलाभेन[11] प्रयच्छ येन ते द्विगुणं शरीरं भवति स्वामिनः पुनः प्राणयात्रा भवति । तदा-

---

१ Attained his youth. २ Wild. ३ Was wounded. ४ The satisfying of hunger. ५ By reason of his having taken shelter with him. ६ There is nothing in this world tnat is difficult to destroy, inaccessible, and unfit to do, for the talent of the talented ; therefore, one should use it. ७ I shall say something or propose something to you for the sake of our lord ( the lion ). ८ Without any doubt or suspicion. ९ When I have done the welfare of the lord ; if I do what is for the welfare of our lord. १० I shall have done a hurdred righteous actions. ११ For two-fold benefit.

कर्ण्य शङ्कुकर्णः प्राह । भद्र यद्येवं तन्मदीयप्रयोजनमितदुच्यताम् । स्वाम्यर्थः क्रियतामिति । परमत्र धर्मः प्रतिभूरिति ते विचिन्त्य सर्वे सिंहसकाशमाजग्मुः । ततश्चतुरक आह । देव न किंचित्सत्त्वं प्राप्तम् । भगवानादित्योऽप्यस्तंगतः । तद्यदि स्वामी द्विगुणं शरीरं प्रयच्छति ततः शङ्कुकर्णोऽयं द्विगुणवृद्ध्या स्वशरीरं प्रयच्छति धर्मप्रतिभुवा । सिंह आह । भो यद्येवं तत्सुन्दरतरम् । व्यवहारस्यास्य धर्मः प्रतिभूः क्रियतामिति । अथ सिंहवचनानन्तरं वृकशृगालाभ्यां विदारितोभयकुक्षिः शङ्कुकर्णः पञ्चत्वमुपगतः । अथ वज्रदंष्ट्रश्चतुरकमाह । भोश्चतुरक यावदहं नदीं गत्वा स्नानदेवतार्चनविधिं कृत्वागच्छामि तावत्त्वयाप्रमत्तेन भाव्यमित्युक्त्वा नद्यां गतः । अथ तस्मिन्गते चतुरकश्चिन्तयामास । कथं ममैकाकिनो भोग्योऽयमुष्ट्रो भविष्यतीति विचिन्त्य क्रव्यमुखमाह । भोः क्रव्यमुख क्षुधालुर्भवान् । तद्यावदसौ स्वामी नागच्छति तावत्त्वमस्योष्ट्रस्य मांसं भक्षय । अहं त्वां स्वामिनो निर्दोषं प्रतिपादयिष्यामि । सोऽपि तच्छ्रुत्वा यावत्किंचिन्मांसमास्वादयति तावच्चतुरकेणोक्तम् । भोः क्रव्यमुख समागच्छति स्वामी । तत्त्यक्त्वैनं दूरे तिष्ठ येनास्य भक्षणं न विकल्पयति । तथानुष्ठिते सिंहः

---

१ Let this my *readiness to serve the use of our lord* be reported to him ( lion ); that is, let the lion know that I am ready even to sacrifice my life for his. २ Thinking that justice was their surety having thought that justice was pledged &c. ३ For double the amount ( the original and the principle being equal ). ४ Justice being its security. धर्मः प्रतिभूर्यस्या सा. ब. qualifying द्विगुणवृद्ध्या. ५ Bargain, contract, transaction. ६ Bathing and worshipping gods. ७ To be eaten by ( me ) alone. ८ The wolf. ९ I shall plead your innocence in the presence of our lord. १० Suspect or doubt. Having स or स्वामी for its subject.

समायातो यावदुष्ट्रं पश्यति तावद्रिक्तीकृतहृदयो दासेरकः । ततो भ्रूकुटिं कृत्वा परुषतरमाह । अहो केनैष उष्ट्र उच्छिष्टतां नीतो येन तमपि व्यापादयामि । एवमभिहिते क्रव्यमुखश्चतुरकमुखमवलोकयति । किल तद्वद किंचिद्येन मम शान्तिर्भवति । अथ चतुरको विहस्योवाच । भो मामनादृत्य पिशितं भक्षयित्वाधुना मन्मुखमवलोकयसि । तदास्वादयास्य दुर्नयतरोः फलमिति । तदाकर्ण्य क्रव्यमुखो जीवनाशभयाद्दूरदेशं गतः । एतस्मिन्नन्तरे तेन मार्गेण दासेरकसार्थो भाराक्रान्तः समायातः । तस्याग्रसरोष्ट्रस्य कण्ठे महती घण्टा बद्धा । तस्याः शब्दं दूरतोप्याकर्ण्य सिंहो जम्बुकमाह । भद्र ज्ञायतां किमेष रौद्रः शब्दः श्रूयतेश्रुतपूर्वः । तच्छ्रुत्वा चतुरकः किंचिद्वनान्तरं गत्वा सत्वरमभ्युपेत्य प्रोवाच । स्वामिन्गम्यतां गम्यतां यदि शक्नोषि गन्तुम् । सोब्रवीत् । भद्र किमेवं व्याकुलो दृश्यसे । तत्कथय किमेतदिति । चतुरक आह । स्वामिन् एष धर्मराजस्तवोपरि कुपितो यदनेनाकाले दासेरकोयं मदीयो व्यापादितस्तत्सहस्रगुणमुष्ट्रमस्य सकाशाद्ग्रहीष्यामीति निश्चित्य बृहन्मानमादायाग्रेसरस्योष्ट्रस्य ग्रीवायां घण्टां बद्ध्वा वध्यदासेरकसक्तानपि पितृपितामहानादाय वैरनिर्यातनार्थमायात एव । सिंहोपि तच्छ्रुत्वा सर्वतो दूरादेवावलोक्य मृतमुष्ट्रं परित्यज्य प्राणभयात्प्रनष्टः । चतुरकोपि शनैः शनैस्तस्योष्ट्रस्य मांसं भक्षयामास ।

---

१ Having the heart emptied or taken away. २ Having frowned. ३ The state of being the remains of what is already eaten; the state of being defiled by previous eating. ४ Surely, certainly. ५ Of the tree of injustice or iniquity. दुर्नयः एव तरुः. क. ६ A herd. ७ Confused, frightened. ८ That he &c. These words are reported as if uttered by Dharmarája with respect to the lion. ९ One thousand times such camels &c. १० With a great feeling of wounded pride. ११ Killed: Here वध्य has an active sense. १२ Belonging to, attached to. १३ To wreak vengeance; to retaliate.

अतोऽहं ब्रवीमि परस्य पीडनं कुर्वन्निति।

अथ दमनके गते संजीवकश्चिन्तयामास। अहो किमेतन्मया कृतं यच्छष्पादोऽपि[1] मांसाशिनस्तस्यानुगः[2] संवृत्तः। अथवा साध्विदमुच्यते।

[3]अगम्यान्यः पुमान्याति असेव्यांश्च निषेवते।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा॥ ३५०॥

तत्किं करोमि। क्व गच्छामि। कथं मे शान्तिर्भविष्यति। अथवा तमेव पिङ्गलकं गच्छामि कदाचिन्मां शरणागतं रक्षति प्राणैर्न वियोजयति। यत उक्तं च।

[4]धर्मार्थं यततामपीह विपदो दैवाद्यदि स्युः क्वचि-
त्तत्तासामुपशान्तये सुमतिभिः कार्यो विशेषान्नयः।
लोके ख्यातिमुपागतात्र सकले लोकोक्तिरेषा यतो
दग्धानां किल वह्निना हितकरः सेकोऽपि तस्योद्भवः॥३५१॥

तथा च। [5]लोकेऽथवा तनुभृतां निजकर्मपाकं
नित्यं समाश्रितवतां सुहितक्रियाणाम्।

---

१ Though a graminivorous animal. शष्पं अत्ति २ Follower. ३ That man, who goes to those who are not worthy of being resorted to, and serves those who are not fit to be served, meets with death, just as a mule meets with death in the shape of her conception. It is a general notion that a mule dies just after delivery. ४ If misfortune should ever befall those who strive for justice by accident, talented persons should especially use justice for removing them, since this popular saying (लोकोक्ति) is known to all the world, that the lotion consisting of fire is a beneficial remedy for the burns of those who are scorched by fire. यतता = यतमानानां. लोकोक्ति = लोकानां उक्तिः—lit. the speech of people. तस्योद्भव: = वह्निसमुद्भवः. ५ Or whatever is destined to happen whether good or evil earned by their conduct, to those people in this world who always reap the fruits of their own actions and whose actions are well-directed, does certainly happen; hence there is no cause for consideration (there is no use in considering &c.).

भावार्जितं शुभमथाप्यशुभं निकामं
यद्भावि तद्भवति नात्र विचारहेतुः ॥ ३७२ ॥

अपरं चान्यत्र गतस्यापि मे कस्यचिद्दुष्टसत्त्वस्य मांसाशिनः सकाशान्मृत्युर्भविष्यति । तद्वरं सिंहात् । उक्तं च ।

[1]महता स्पर्धमानस्य विपदेव गरीयसी ।
दन्तभङ्गोपि नागानां श्लाघ्यो गिरिविदारणे ॥ ३७३ ॥

तथा च । [2]महतोपि क्षयं लब्ध्वा श्लाघ्यं नीचोपि गच्छति ।
दानार्थी मधुपो यद्वद्गजकर्णसमाहतः ॥ ३७४ ॥

एवं निश्चित्य स्खलितगतिर्मन्दं मन्दं गत्वा सिंहाश्रयमपठत् । अहो साध्विदमुच्यते ।

[3]अन्तर्लीनभुजङ्गमं गृहमिव व्यालाकुलं वा वनं
ग्राहाकीर्णमिवाभिरामकमलच्छायामनाथं सरः ।
नानादुष्टजनैरसत्यवचनासक्तैरनार्यैर्वृतं
दुःखेन प्रतिगम्यते प्रचकितै राज्ञां गृहं वार्धिवत् ॥ ३७५ ॥

एवं पठन्दमनकोक्ताकारं पिङ्गलकं दृष्ट्वा प्रचकितः संवृतशरीरो दूरतरं प्रणामकृतिं विनाप्युपविष्टः । पिङ्गलकोपि तथाविधं तं विलोक्य दमनकवाक्यं श्रद्दधानः कोपात्तस्योपरि पपात । अथ संजी-

---

१ Even calamity is more honourable to him who is rivalling with the great; even the breaking of the tusks of elephants is desirable in tearing mountains. २ Even a mean person attains praise even by meeting with destruction at the hands of the great; just as a bee ( also a drunkard ) who is desirous of the rutting juice ( also desirous of doing charity ) is struck by the ears of the elephant. ३ The abode of a king which is filled with various sorts of wicked people, and by those rude fellows who are given to telling lies, is approached by frightened people with great pain like the sea, which is like a house having snakes concealed inside, or like a forest filled with ferocious animals or like a lake abounding in alligators and contains multitudes of beautiful lotuses–The epithets in 'the first two lines can also be made applicable to the राज्ञां गृह by taking the words भुजंगम &c. in different senses. अन्तर्लीनभुजंगमं. ४. वार्धि Sea (lit. वारः धीयन्ते यस्मिन् सः ). ४ Startled. ५ Guarding his body.

वकः खरनखरविकर्तितपृष्ठः[1] शृङ्गाभ्यां[2] तदुदरमुल्लिख्य कथमपि[3] तस्मादपेतः शृङ्गाभ्यां हन्तुमिच्छन्युद्धार्थावस्थितः[4]। अथ द्वावपि तौ पुष्पितपलाशप्रतिमौ[5] परस्परवधकाङ्क्षिणौ दृष्ट्वा करटको दमनकमाह। भो मूढमते अनयोर्विरोधं वितन्वता त्वया साधु न कृतम्। न च त्वं नीतितत्त्वं वेत्सि। नीतिविद्भिरुक्तं च।

[6]कार्याण्युत्तमदण्डसाहसफलान्यायाससाध्यानि ये
बुद्ध्या संशमयन्ति नीतिकुशलाः साम्नैव ते मन्त्रिणः।
निःसाराल्पफलानि ये त्वविधिना वाञ्छन्ति दण्डोद्यमै-
स्तेषां दुर्नयचेष्टितैर्नरपतेरारोप्यते श्रीस्तुलाम ॥ ३५६ ॥

तद्यदि स्वाम्यभिघातो[7] भविष्यति तत्किं त्वदीयमन्त्रबुद्ध्या[8] क्रियते। अथवा[9] यदि संजीवको न वध्यते तथाप्यभव्यं[10] यतः प्राणसंदेहात्तस्य च वधः[11]। तन्मूढ कथं त्वं मन्त्रिपदमभिलषसि। सामसिद्धिं[12] न वेत्सि। तद्वृथा मनोरथोऽयं ते दण्डरुचेः[13]। उक्तं च।

---

१ Whose back was mauled by the sharp nails (of the lion). २ Having torn or scratched. ३ Having escaped from him with difficulty. ४ Became ready to fight. ५ Resembling the blossom of the Palāśa-tree, by reason of the red drops of blood with which their bodies were covered. ६ Those are really ministers versed in politics who by means of talent peacefully settle such affairs as are deserving of the highest punishment and as are to be accomplished with troubles; while the royal power is placed in the balance, that is, endangered by the imprudent actions of those who wish to accomplish worthless and insignificant affairs improperly and by means of punishment. उत्तम...नि- उत्तमदण्डसाहस एव फलं येषां तानि. ब. नि ...नि-नि साराणि अल्पानि च फलानि येषां. त. अविधिना by what is not a rule, against the rule. तुलामारोप्यते is placed in the balance, is made to totter. ७ Destruction. ८ Knowledge or power of counselling. ९ On the other hand. १० Not good. ११ His death will happen by his life being in danger. १२ Accomplishment (of an object) by peaceful means. साम्नैव सिद्धिः तृ. त. १३ Of one fond of punishment as a means to an end. दण्डाय रुचिः यस्य सः. ब.

[1]सामादिर्दण्डपर्यन्तो नयः प्रोक्तः स्वयंभुवा ।
तेषां दंडस्तु पापीयांस्तं पश्चाद्विनियोजयेत् ॥ ३७७॥

तथा च । [2]साम्नैव यत्र सिद्धिर्न तत्र दण्डो बुधेन विनियोज्यः ।
पित्तं यदि शर्करया शाम्यति कोर्थः पटोलेन ॥ ३७८ ॥

तथा च । [3]आदौ साम प्रयोक्तव्यं पुरुषेण विजानता ।
सामसाध्यानि कार्याणि विक्रियां यान्ति न क्वचित् ॥३७९॥

[4]न चन्द्रेण न चौषध्या न सूर्येण न वह्निना ।
साम्नैव विलयं याति विद्विषिप्रभवं तमः ॥ ३८० ॥

तथा यत्त्वं मन्त्रिपदमभिलषसि तदप्ययुक्तं यतस्त्वं मन्त्रगतिं[5] न वेत्सि । यतः पञ्चविधो मन्त्रः[6] स च कर्मणामारम्भोपायः पुरुषद्रव्यसंपद्देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिश्चेति ।

---

१ Policy is said by the self-born (Brahman) to begin with peace ( सामन ) and to end with punishment ; of these punishment is sinful, and one should use it afterwards ( that is, when the others have failed). सामादिः and दण्डः पर्यन्तो यस्य स. ब. The order of these is साम, दान, भेद and दण्ड. These four being the remedies of accomplishing objects. २ In that case where success is to be gained only by *peace*, a wise man should not make use of *punishment*; if bile can be made to subside by sugar, what is the use of पटोल ? ( A kind of cucumber called कडू पडवळ in Marathi and used in severe cases of bilious affections ). ३ A clever man should first use *peace*; (for) the business accomplishable by peace can never be spoiled ( lit. changed ). विजानता = विशेषेण जानता. ४ The darkness ( calamity ) arising from a bitter foe, is dispelled only by means of peace and not by the moon, not by shining medicinal herbs, not by the sun and not by fire. विद्विषिप्रभवं = विद्वेषी प्रभवः यस्य तत्. ब. ५ The course or direction which a counsel should take. ६ Mantra ( counsel ) is of five kinds such as:—(*a*) आरंभोपाय. the remedy to be applied at the beginning, (*b*) पुरुषद्रव्यसंपद् the plenty of men and wealth, (*c*) देशकालविभाग. the proper division of place and time, (*d*) विनिपात-प्रतीकारः. the retaliation of a calamity, and (*e*) कार्यसिद्धि the accomplishment of a business. पुरुषद्रव्ययोः संपद्. ष. त.

सोयं स्वाम्यमात्ययोरेकतमस्य[1] किंवा द्वयोरपि विनिपातः समुत्पद्यते[2] लमः । उक्तं च ।

[3]मन्त्रिणां भिन्नसंधाने भिषजां सान्निपातिके ।
कर्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः ॥ ३८१ ॥

तन्मूर्ख नैतत्कर्तुं समर्थस्त्वम् । उक्तं च ।

[4]घातयितुमेव नीचः परकार्यं वेत्ति न प्रसाधयितुम् ।
पातयितुमेव शक्तिर्नाखोरुद्धर्तुमन्नपिटम् ॥ ३८२ ॥

अथवा न ते दोषोयं स्वामिनो दोषो यस्ते वाक्यं श्रद्दधाति । उक्तं च ।

[5]नराधिपा नीचजनानुवर्तिनो
बुधोपदिष्टेन न यान्ति ये पथा ।
विशन्त्यतो दुर्गममार्गनिर्गमं
समस्तसंबाधमनर्थपञ्जरम् ॥ ३८३ ॥

तद्यदि त्वमस्य मन्त्री भविष्यसि तदान्योप्यस्य समीपे साधुजनो न समेष्यति । उक्तं च ।

[6]गुणालयोप्यसन्मन्त्री नृपतिर्नाधिगम्यते ।
प्रसन्नस्वादुसलिलो दुष्टग्राहो यथा ह्रदः ॥ ३८४ ॥

---

१ Of one of the two, viz, the king and the minister. Here एकतम is inaccurately used for एकतर as in the Kādambarī कष्टतमा for कष्टतराम्. २ Is closely impending; Cf. सन्नद्ध लग्न already explained. ३ This verse is equal to 127. ४ This verse is equal to 363. ५ Those kings, who, following the advice of the mean, do not go by the way pointed out by the wise, enter as it were, into a cage of calamities surrounded by dangers on all sides (समस्तसंबाधं) and affording no easy egress, that is, the way out of which is very difficult दुर्गमः मार्गनिर्गमः यस्मात् ब. समस्तसंबाधं-समास्ता संबाधाः यस्य. ब. ६ A king having bad ministers, though he be an abode of all virtues, is not approached, as a pond, though full of clear and sweet water, but containing wicked alligators, (is not approached). असन्मन्त्री—असन्तः मन्त्रिणो यस्य. ब.; प्रसन्नस्वादुसलिलः—प्रसन्नं स्वादु च सलिलं यस्य. ब.; दुष्टग्राहः— दुष्टाः ग्राहाः यस्मिन्. ब.

तथा शिष्टजनरहितस्य स्वामिनोपि नाशो भविष्यति । उक्तं च ।

[१]चित्रास्वादकथैर्भृत्यैरनायासितकार्मुकैः ।
ये रमन्ते नृपास्तेषां रमन्ते रिपवः श्रिया ॥ ३८५ ॥

[२]तत्किं मूर्खोपदेशेन । केवलं दोषो न गुणः । उक्तं च ।

[३]नानाम्यं नमते दारु नाश्मनि स्यात्क्षुरक्रिया ।
सूचीमुख विजानीहि नाशिष्यायोपदिश्यते ॥ ३८६ ॥

दमनक आह । कथमेतत् । सोऽब्रवीत् ।

## ॥ कथा १७ ॥

अस्ति कस्मिंश्चित्पर्वतैकदेशे वानरयूथम् । तच्च कदाचिद्धेमन्त[४]समये सौम्यवातसंस्पर्श[५]वेपमानकलेवरं प्रवर्षद्धनधारा[६]निपातसमाहतं न कथंचिच्छान्ति[७]मगमत् । अथ केचिद्वानरा वह्निकणसदृशानि[८] गुञ्जा[९]फलानि विचित्य वह्निवाञ्छया फूत्कुर्वन्तः[१०] समन्ततस्थुः ।

---

१ The enemies of those kings, who enjoy pleasures with such servants as are always talking of various kinds of tastes of things, and have never used their bows strenuously, always enjoy prosperity. चित्रास्वादकथैः. चित्रास्वादानां कथा येषां ते. ब. अनायासितकार्मुकैः—अनायासितं कार्मुकं यैः. ब. २ What is then the use of the advice of a fool ? ३ A timber that cannot be bent, never bends, there will be no operation of a razor on a stone ; oh needle beaked one, know that no advice is given ( should be given ) to one who is not a faithful pupil, that is, who will not follow it. ४ The season of the two months of मार्गशीर्ष and पौष, that is, the winter season. ५ —Whose bodies were shivering with cold by the touch of strong gust of wind. It is a ब. and सौम्य ought to be असौम्य. असौम्यवातसंस्पर्शेन वेपमानं कलेवरं यस्य. ६ Beaten by the rain falling down in torrents. ७ Could get no peace of mind or ease with all attempts. ८ Resembling sparks of fire वह्निकणैः सदृशानि. त. त. ९ A kind of small fruits called in Marathi गुंजा and used in weighing gold and other valuable metals. १० Blowing them ( गुंजाफलानि ) mistaking them for fire which they wanted to warm themselves with.

अथ सूचीमुखो नाम पक्षी तेषां तं वृथायासमवलोक्य प्रोवाच । भो भवन्तः सर्वे मूर्खतमाः । नैते वह्निकणा वह्निकणसदृशानि गुञ्जाफलान्येतानि । तत्किं वृथाश्रमेण । नैतस्माच्छीतरक्षा भवति । तदन्विष्यतां कश्चिन्निर्वातो वनप्रदेशो गुहा वा गिरिकन्दरं वा । अद्यापि साटोपो मेघा दृश्यन्ते । अथ तेषामेकतमो वृद्धवानरस्तमुवाच । भोः किं तवानेन व्यापारेण । तद्गम्यताम् । उक्तं च ।

[६]मुहुर्विघ्नितकर्माणं द्यूतकारं पराजितम् ।
नालापयेद्विवेकज्ञो य इच्छेच्छ्रेय आत्मनः ॥ ३८७ ॥

तथा च । [७]आखेटकं वृथाक्लेशं मूर्खं व्यसनसंस्थितम् ।
समालापेन यो युङ्क्ते स गच्छति पराभवम् ॥ ३८८ ॥

सोऽपि तमनादृत्य भूयोऽपि वानराननवरतमाह । भोः किं वृथाक्लेशेन । अथ यावदसौ न कथंचित्प्रलपन्विरमति तावदेकेन वानरेण व्यर्थश्रमत्वात्कुपितेन पक्षाभ्यां [१०]गृहीत्वा शिलायामास्फालित उपरतश्च॥

अतोऽहं ब्रवीमि नानाम्यं नमते दार्वित्यादि ।

तथा च । [१२]उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ।
पयःपानं भुजङ्गानां केवलं विषवर्धनम् ॥ ३८९ ॥

---

१ Vain attempt. २ There will be no protection from cold by these, you cannot protect yourselves from cold by means of these fruits. ३ Free from wind, not exposed to wind. ४ The cave of a mountain. ५ Increasing, spreading. ६ That considerate man who wishes for his own welfare, should not speak with him, who interrupts his actions often and often, him who is a gambler, and him who is defeated. विघ्नितानि कर्माणि येन. ब. ७ He, who engages in conversation on equal terms with a hunter, with him whose attempts have been foiled, and a fool who is in difficulty, sustains a defeat. वृथाक्लेश-वृथा क्लेशा यस्य तं. ब. ८ Incessantly, unceasingly. ९ Did not cease talking. १० Being seized with the wings. ११ Dashed, struck. १२ The advice given to a fool irritates him and does not satisfy (him); the drinking of milk by snakes only increases their poison. पयःपानं ष. त. विषवर्धनं ष. त.

[1]उपदेशो न दातव्यो यादृशे तादृशे जने ।
पश्य वानरमूर्खेण सुगृही निगृहीकृता ॥ ३९० ॥

दमनक आह । कथमेतत् । सोऽब्रवीत् ।

## ॥ कथा १८ ॥

कस्मिंश्चिद्वने शमीवृक्षशाखालम्बितवसथं[2] कृत्वारण्यचटकदंपती[3] प्रतिवसतः स्म । अथ कदाचित्तयोः सुखसंस्थयोर्हेमन्तमेघो[4][5] मन्दं मन्दं वर्षितुमारब्धः । अत्रान्तरे कश्चिच्छाखामृगो[6] वातासारसमाहतः[7] प्रोद्धूषितशरीरो[8] दन्तवीणां वादयन्[9] वेपमानस्तस्याः शम्या मूलमासाद्योपविष्टः । अथ तं तादृशमवलोक्य चटका प्राह । भो भद्र ।

[10]हस्तपादसमोपेतो दृश्यसे पुरुषाकृतिः ।
शीतेन भिद्यसे मूढ कथं न कुरुषे गृहम् ॥ ३९१ ॥

एतच्छ्रुत्वा वानरः सकोपमाह यत्त्वं कस्मान्मौनव्रता न भवसि । अहो धार्ष्ट्र्यमस्याः । अद्य मामुपहसति ।

[11]सूचीमुखि दुराचारे रे रे पण्डितवादिनि ।
नाशङ्कसे प्रजल्पन्ती तत्किमेनां न हन्म्यहम् ॥ ३९२ ॥

---

१ Advice should not be given to anyone whatever, behold, one having a good abode was deprived of it by a foolish ape. यादृश तादृश has an indefinite sense २ Habitation or nest hanging down from the branch of a S'ami tree. Here वसथ is, I think, a misprint for अवसथ. ३ A pair of sparrows. ४ Living in a happy dwelling सुख (संस्था ययोः) तयोः. ५ The rain of हेमन्त, that is, the months of मार्गशीर्ष and पौष. ६ A monkey. ७ A gust; a shower. ८ With the body violently shaken. ९ Chattering his teeth. १० Endowed with hands and feet, you seem to have a human shape; you are troubled by cold, why fool, do you not construct a house? ११ Oh you needle-mouthed and ill-behaved one, talking like a Pandita, you do not fear to talk; why should I then not kill her? पंडितं वदतीति. The last words are not addressed to the sparrow but to the reader in general.

एवं प्रलप्य तामाह । मुग्धे किं[1] तव ममोपरि चिन्तया । उक्तं च ।

वाच्यं श्रद्धासमेतस्य पृच्छतश्च[2] विशेषतः ।
प्रोक्तं श्रद्धाविहीनस्य अरण्यरुदितोपमम् ॥ ३९३ ॥

तत्किं बहुना तावत् । स कुलायस्थितया तयाभिहितो[3] यावत्तावच्छमीमारुह्य तं कुलायं शतधा भङ्गमनयत् ॥

अतोऽहं ब्रवीम्युपदेशो न दातव्य इति ।

तन्मूर्ख शिक्षापितोऽपि[4] न शिक्षितस्त्वम् । अथवा न ते दोषोऽस्ति यतः साधोः शिक्षा गुणाय[5] संपद्यते नासाधोः । उक्तं च ।

[6]किं करोत्येव पाण्डित्यमस्थाने विनिवेशितम् ।
अन्धकारप्रतिच्छन्ने घटे दीप इवाहितः ॥ ३९४ ॥

तद्व्यर्थपाण्डित्यं त्वमाश्रितः । मम वचनमशृण्वन्नात्मनः शान्तिमपि न वेत्सि । उक्तं च ।

[7]अप्यात्मनो विनाशं गणयति न खलः परव्यसनहृष्टः ।
प्रायो मस्तकनाशे समरमुखे नृत्यति कबन्धः ॥ ३९५ ॥

अहो साध्विदमुच्यते ।

धर्मबुद्धिः कुबुद्धिश्च द्वावेतौ विदितौ मम ।
पुत्रेण व्यर्थपाण्डित्यात्पिता धूमेन घातितः ॥ ३९६ ॥

दमनक आह । कथमेतत् । सोऽब्रवीत् ।

---

१ What have you to do by caring for me? २ Advice should be given to one who has faith in the advice, and especially to one who may ask for it; what is said to one who is void of confidence, is like a cry in the wilderness. ३ No sooner was he addressed by her than &c. ४ Taught P. P. of the form शिक्षापय, a prâkritik from the caus. of शिक्ष, the desiderative of शक्. ५ The instruction imparted to a good man tends to advantage (गुणाय). ६ What can wisdom do when it is used or employed in a wrong place, it is like a lamp placed in a pot covered over with darkness. ७ A wicked man delighted at the misery of others does not mind even his own ruin; generally when the head is severed from the trunk, the latter dances in the front of a battle. परव्यसन हृष्ट–परव्यसनेन हृष्टः. तृ. त. ८ Dharmabuddhi (one religiously inclined) and Kubuddhi (one of evil intentions)-both these are known to me; a son killed his father with smoke through vain wisdom.

## ॥ कथा १९ ॥

कस्मिंश्चिद्देशे धर्मबुद्धिः पापबुद्धिश्च द्वे मित्रे प्रतिवसतः । अथ कदाचित्पापबुद्धिना चिन्तितं यदहं तावन्मूर्खो दारिद्र्योपेतश्च[१] । तदेनं धर्मबुद्धिमादाय देशान्तरं गत्वास्याश्रयेणार्थोपार्जनां कृत्वैनमपि वञ्चयित्वा सुखीभवामि । अथान्यस्मिन्नहनि पापबुद्धिर्धर्मबुद्धिं प्राह । भो मित्र वार्द्धकभावे किमात्मनश्चेष्टितं स्मरिष्यसि[२] । देशान्तरमदृष्ट्वा कां शिष्टजनवार्तां[३] कथयिष्यसि । उक्तं च ।

[४]देशान्तरेषु बहुविधभाषावेषादि येन न ज्ञातम् ।
भ्रमता धरणीपीठे तस्य फलं जन्मनो व्यर्थम् ॥ ३९७ ॥

तथा च । [५]विद्यां वित्तं शिल्पं तावन्नाप्नोति मानवः सम्यक् ।
यावद्व्रजति न भूमौ देशाद्देशान्तरं हृष्टः ॥ ३९८ ॥

अथ तद्वचनमाकर्ण्य प्रहृष्टमनास्तेनैव सह गुरुजनानुज्ञातः शुभेऽहनि देशान्तरं प्रस्थितः । तत्र[६] च धर्मबुद्धिप्रभावेण भ्रमता पापबुद्धिना प्रभूततरं वित्तमासादितम् । ततश्च तौ द्वावपि प्रभूतोपार्जितवित्तौ[७] प्रहृष्टौ स्वगृहं प्रत्यौत्सुक्येन प्रस्थितौ । उक्तं च ।

[८]प्राप्तविद्यार्थशिल्पानां देशान्तरनिवासिनाम् ।
क्रोशमात्रोऽपि भूभागः शतयोजनवद्भवेत् ॥ ३९९ ॥

---

१ Overcome by poverty. २ What exploit of yours ( performed in youth ) will you remember in old age? ३ Intelligence about respectable people. ४ Vain is the fruit of the existence of that man, who, while wandering on the surface of the earth, has not known the various languages and dresses &c. of different countries विविध-भाषावेषा॰ आदौ यस्य तत्. ५ A man does not properly acquire learning, wealth and art so long as he does not go from country to country on the earth with a delighted heart. ६ In the foreign country. ७ Who had acquired much wealth. It is a ब. but one expects it to be उपार्जितप्रभूतवित्तौ. ८ To those who have acquired learning, wealth and knowledge of art, and are residing in a foreign country, the distance of even १ Koss, will be ( appear ) like a hundred Yojanas. This, of course, will happen by reason of their anxiety to reach home.

अथ स्वस्थानसमीपवर्तिना पापबुद्धिना धर्मबुद्धिरभिहितः । भद्र न सर्वमेतद्धनं गृहं प्रति नेतुं युज्यते यतः कुटुम्बिनो बान्धवाश्च प्रार्थयिष्यन्ति[1] । तदत्रैव वनगहने[2] क्वापि भूमौ निक्षिप्य किंचिन्मात्र[3]मादाय गृहं प्रविशावो भूयोपि प्रयोजने[4] संजाते तन्मात्रं[5] समेत्यास्मात्स्थानान्नेष्यावः । उक्तं च ।

न[6] वित्तं दर्शयेत्प्राज्ञः कस्यचित्स्वल्पमप्यहो ।
मुनेरपि यतस्तस्य दर्शनाच्चलते मनः ॥ ४०० ॥

तथा च ।

यथा[7]मिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि ।
आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान् ॥ ४०१ ॥

तदाकर्ण्य धर्मबुद्धिराह । भद्र एवं क्रियताम । तथानुष्ठिते द्वावपि तौ स्वगृहं गत्वा सुखेन स्थितवन्तौ । अन्यदा च पापबुद्धिर्निशीथे तत्रागत्य सर्वं वित्तमादाय गर्तं पूरयित्वा[8] स्वभवनं जगाम । अथान्येद्युर्धर्मबुद्धिं समेत्य प्रोवाच । सखे बहुकुटुम्बा[9] वयं वित्ताभावात्सीदामः[10] । तद्गत्वा ततः स्थानात्किंचिद्वित्तमानयावः । सोब्रवीत । भद्र एवं क्रियतामिति । अथ द्वावपि गत्वा यावत्स्थानं खनतस्तावद्रिक्तभाण्डं दृष्टवन्तौ । अत्रान्तरे पापबुद्धिः शिरस्ताडयन्[11] प्रोवाच । भो धर्मबुद्धे त्वया हृतमेतद्धनं नान्येन यतो भूयोपि गर्तापूर्णं

---

१ Will ask for it. २ In some difficult place in the forest. ३ A little. ४ When an occasion arises, when there is need. ५ Only as much as is wanted. ६ A wise man should not show his wealth, however little, to any body; since the mind even of a sage is tempted (to take it). चलते lit moves, that is, moves from the right path. ७ Just as flesh is devoured by the fish in water, by the beasts on land and by the birds in the air (sky), so is a rich man (deprived of his wealth) everywhere. ८ Having filled up or covered the hole made in the ground. ९ Having many members in the family. बहु कुटुंबं येषां ते. ब. १० Suffer misery. ११ Beating his head.

कृतम् । तत्प्रयच्छ मे तस्यार्धमथवाहं राजकुले[1] निवेदयिष्यामि । स आह । भो दुरात्मन्मा मैवं वद । धर्मबुद्धिः खल्वहम्[2] । नैतच्चौरकर्म करोमि । उक्तं च ।

[3]मातृवत्परदाराणि परद्रव्याणि लोष्ठवत् ।
आत्मवत्सर्वभूतानि यः पश्यति स पश्यति ॥ ४०२ ॥

एवं तौ द्वावपि विवदमानौ धर्माधिकारिणं गतवन्तौ प्रोचतुः परस्परं दूषयन्तौ[4] । अथ धर्माधिकरणाधिष्ठितपुरुषैर्[5]दिव्यार्थं[6] यावन्नियोजितौ तावत्पापबुद्धिराह । अहो न सम्यग्दृष्टो न्यायः[7] । उक्तं च ।

[8]विवादेऽन्विष्यते पत्रं पत्राभावे तु साक्षिणः ।
साक्ष्यभावात्ततो दिव्यं प्रवदन्ति मनीषिणः ॥ ४०३ ॥

अत्र[9] विषये मम वृक्षदेवताः[10] साक्षिभूताः सन्ति । तता एतावयोरेकतमं[11] चौरं साधुं वा करिष्यन्ति[12] । अथ तैः सर्वैरभिहितम् । भो युक्तमुक्तं भवता । उक्तं च ।

[13]अन्त्यजोऽपि यदा साक्षी विवादे संप्रजायते ।
न तत्र विद्यते दिव्यं किं पुनर्यत्र देवताः ॥ ४०४ ॥

तदस्माकमप्यत्र विषये महत्कौतूहलमस्ति । तत्प्रत्यूषसमये[14] द्वाभ्यामस्माभिः सह तत्र वनोद्देशे गन्तव्यमिति । अथ पापबुद्धिः स्वगृहं

---

१ I shall give information of this to the king's officers. २ I am really, as my name signifies (धर्मबुद्धि), righteous-minded. ३ He, who looks upon others' wives as mothers, and on others' wealth as a lump of earth, and on all creatures as upon himself, really considers rightly or correctly. पश्यति is used here as a neuter noun as an exceptional case. ४ Accusing each other of crime. ५ Persons appointed to the office of judge, judges. ६ Were ordered to go through an ordeal. ७ The judgment is not justly pronounced, the decision given is unjust. ८ In a dispute, first a written proof is required, in the absence of a writing, witnesses are wanted and in the absence of witnesses, an ordeal is resorted to; so say the wise. ९ In this case, in the present instance. १० Sylvan deities are my witnesses. ११ For एकतर.-inaccurately used. १२ Will declare. १३ In a dispute, when even a low-caste is coming forth as a witness, there is no ordeal required, how much more so, when there are deities themselves as witnesses. १४ At the time of early morning.

गत्वा स्वजनकमुवाच। तात प्रभूतोयं मयार्थो धर्मबुद्धेश्चोरितः। स च तव वचनेन परिणतिं[१] यास्यति। अन्यथा मम प्राणैः सह यास्यति[२]। स आह। कथय द्रुतं वद येन प्रोच्य[३] तद्द्रव्यं स्थिरतां नयामि[४]। पापबुद्धिराह। तात अस्ति तत्प्रदेशे महाशमी। तस्यां महत्कोटरमस्ति। तत्र त्वं सांप्रतमेव प्रविश। ततः प्रभातेहं यदा सत्यश्रावणं[५] करोमि तदा त्वया वाच्यं यद्धर्मबुद्धिश्चोर इति। तथानुष्ठिते प्रत्यूषे पापबुद्धिः स्नात्वा धर्मबुद्धिपुरःसरो राजपुरुषैः सह तां शमीमभ्येत्य तारस्वरेण प्रोवाच।

[६]आदित्यचन्द्रावनिलोनलश्च
द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च संध्ये
धर्मो हि जानाति नरस्य वृत्तम्॥ ४०५॥

तत्कथयत वनदेवता आवयोर्यश्चोर इति। अथ पापबुद्धिपिता शमीकोटरस्थः प्रोवाच। भो धर्मबुद्धिना हृतमेतद्धनम्। तदाकर्ण्य सर्वे राजपुरुषा विस्मयोत्फुल्ललोचना[७] यावद्धर्मबुद्धेर्वित्तहरणोचितं निग्रहं शास्त्रदृष्ट्यावलोकयन्ति[८] तावद्धर्मबुद्धिना तच्छमीकोटरं वह्निभोज्यद्रव्यैः[९] परिवार्य वह्निना संदीपितम्। अथ ज्वलति तस्मिञ्शमीकोटरे अर्धदग्धशरीरः स्फुटितेक्षणः[१०] करुणं परिदेवयन्पापबुद्धिपिता निश्चक्राम। ततस्तैः सर्वैः पृष्टः सैवं पापबुद्धिचेष्टितं निवेदयामास। अथ ते राजपुरुषाः पापबुद्धिं शमीशाखायां प्रतिलम्ब्य[११] धर्मबुद्धिं प्रशस्येदमूचुः। अहो साध्विदमुच्यते।

---

१ Will be secured (lit. will be ripe). २ Go away with my life, will deprive me of life. ३ Having declared aloud. ४ Make it firm in your possession. ५ Make truth heard, declare the truth. ६ This verse is equal to 182. ७ With the eyes glistening with wonder. ८ Were considering according to law what was the punishment to be awarded to *Dharmabuddhi* adequately to his crime of theft. ९ With combustible things or materials. १० With broken eyes. ११ Having hanged.

[1]उपायं चिन्तयेत्प्राज्ञस्तथापायं च चिन्तयेत् ।
पश्यतो बकमूर्खस्य नकुलेन हता बकाः ॥ ४०६ ॥

धर्मबुद्धिः प्राह । कथमेतत् । ते प्रोचुः ।

## ॥ कथा २० ॥

अस्ति कस्मिंश्चिद्वनोद्देशे बहुबकसनाथो वटपादपः । तस्य कोटरे कृष्णसर्पः प्रतिवसति स्म । स च बकबालकानजातपक्षानपि[2] सदैव भक्षयन्कालं नयति । अथैको बको भक्षितशिशुर्वैराग्यात्[3]सरस्तीरमासाद्य बाष्पपूरपूरित[4]लोचनोऽधोमुखस्तिष्ठति । तं च तादृक्चेष्टित[5]मवलोक्य कुलीरकः प्रोवाच । माम किमेवं रुद्यते भवताद्य । स आह । भद्र किं करोमि । मम मन्दभाग्यस्य बालकाः कोटरनिवासिना सर्पेण भक्षिताः । दुःखितोऽहं तद्दुःखेन । तत्कथय मे यद्यस्ति कश्चिदुपायस्तद्विनाशाय । तदाकर्ण्य कुलीरकश्चिन्तयामास । अयं तावदस्मत्सहज[6]वैरी । तथोपदेशं प्रयच्छामि सत्यानृतं[7] यथान्येऽपि बकाः सर्वे संक्षयमायान्ति । उक्तं च ।

[8]नवनीतसमां वाणीं कृत्वा चित्तं सुनिर्दयम् ।
तथा प्रबोध्यते शत्रुः सान्वयो म्रियते यथा ॥ ४०७ ॥

आह च । माम यद्येवं तन्मत्स्यमांसशकलानि नकुलस्य बिलद्वारात्सर्पकोटरं यावत्प्रक्षिप यथा नकुलस्तन्मार्गेण गत्वा तं दुष्टसर्पं विनाशयति । अथ तथानुष्ठिते मत्स्यमांसानुसारिणा नकुलेन तं कृष्णसर्पं

---

१ A wise man should think out a remedy as also an injury; while a foolish crane was looking on, the cranes were destroyed by a mangoose. २ Even before they had wings, before they were fledged. ३ Through absence of all desires consequent on the offspring being devoured. ४ Flooded or filled with. ५ Thus circumstanced. ६ Natural enemy. ७ True and false, that is, apparently true but really false. ८ Having made the words ( as soft ) as butter, and the heart very hard, an enemy *is so advised* ( should be so advised ) that he dies together with his family.

निहत्य तेऽपि तद्वृक्षा[1]श्रयाः सर्वे बकाश्च शनैः शनैर्भक्षिताः । अतो वयं ब्रूम उपायं चिन्तयेदिति ॥

तदनेन पापबुद्धिनोपायश्चिन्तितो नापायः । तस्य प्राप्तं फलम् । एवं मूढ त्वयाप्युपायश्चिन्तितो नापायः पापबुद्धिवत् । तन्न चासि [2]त्वं सज्जनः केवलं पापबुद्धिरसि ज्ञातो मया स्वामिनः [3]प्राणसंदेहानयनात् । प्रकटीकृतं त्वया स्वयमेवात्मनो दुष्टत्वं कौटिल्यं[4] च । अथवा साध्विदमुच्यते ।

[5]यत्नादपि कः पश्येच्छिखिनामाहारनिःसरणमार्गम् ।
यदि जलदध्वनिमुदितास्त एव मूढा न नृत्येयुः ॥ ४०८ ॥

तद्यदि त्वं स्वामिनमेनां दशां नयसि तदस्मद्विधस्य[6] का गणना । तस्मान्ममासन्नेन[7] भवता न भाव्यम् । उक्तं च ।

[8]तुलां लोहसहस्रस्य यत्र खादन्ति मूषिकाः ।
राजंस्तत्र हरेच्छ्येनो बालकं नात्र संशयः ॥ ४०९ ॥

दमनक आह । कथमेतत् । सोऽब्रवीत् ।

## ॥ कथा २१ ॥

अस्ति कस्मिंश्चिदधिष्ठाने जीर्णधनो[9] नाम वणिक्पुत्रः । स च द्रव्यक्षयाद्देशान्तरगमनमना व्यचिन्तयत् ।

[10]यत्र देशेऽथवा स्थाने भोगान्भुक्त्वा स्ववीर्यतः ।
तस्मिन्विभवहीनो यो वसेत्स पुरुषाधमः ॥ ४१० ॥

---

१ Residing on that tree २ Nor are you good-hearted. ३ By endangering the life of your lord ४ Crookedness. ५ Who can know, even with efforts, the way by which peacocks go out for seeking prey, if those fools delighted at the thunder of the clouds, do not dance. मयूराः &c. आहाराय निःसरणमार्गम् जलद ध्वनि &c ष. त. ६ What account will you make of us? Of what account are persons like us? ७ You should not be near me ८ In the case where mice eat the weight of a thousand ( lbs. ) of iron, oh king, there is no doubt that a crane can take away the child. ९ Of declined wealth. जीर्णं धनं यस्य. ब. १० That man is the worst of men who resides, when without wealth, even in that place or country where he has enjoyed pleasures through his own valour.

तथा च । [1]येनाहंकारयुक्तेन चिरं विलसितं पुरा ।
दीनं वदति तत्रैव यः परेषां स निन्दितः ॥ ४११ ॥

तस्य च गृहे लोहभारघटिता[2] पूर्वपुरुषोपार्जिता तुलासीत् । तां च कस्यचिद्वणिजो गृहे निक्षेपभूतां कृत्वा[3] देशान्तरं प्रस्थितः । ततः सुचिरं कालं देशान्तरं भ्रान्त्वा पुनस्तदेव स्वपुरमागत्य तं श्रेष्ठिनमुवाच । भोः श्रेष्ठिन्दीयतां मे सा निक्षेपतुला[4] । स आह । भो नास्ति सा त्वदीया तुला । मूषिकैर्भक्षिता । जीर्णधन आह । भोः श्रेष्ठिन्नास्ति दोषस्ते यदि मूषिकैर्भक्षितेति । [5]ईदृगेवसंसारः । न किंचिदत्र शाश्वतमस्ति । परमहं नद्यां स्नानार्थं गमिष्यामि । तत्त्वमात्मीयं शिशुमेतं मया सह स्नानोपकरणहस्तं[6] प्रेषयेति । सोपि चौर्यभयात्तस्य शङ्कितः[7] स्वपुत्रमुवाच । वत्स पितृव्योयं तव स्नानार्थं नद्यां यास्यति । तद्गम्यतामनेन सार्धं स्नानोपकरणमादायेति । अहो साध्विदमुच्यते ।

[8]न भक्त्या कस्यचित्कोपि प्रियं प्रकुरुते नरः ।
मुक्त्वा भयं प्रलोभं वा कार्यकारणमेव वा ॥ ४१२ ॥

तथा च । [9]अत्यादरो भवेद्यत्र कार्यकारणवर्जितः ।
तत्र शङ्का प्रकर्तव्या परिणामे सुखावहा ॥ ४१३ ॥

---

१ That man is censurable in the eyes of others who speaks piteously in that very place where he has before enjoyed pleasures, being full of self-pride. २ Made of many weights of iron, that is, made of iron weighing many lbs &c. ३ Having kept as a deposit. ४ The balance kept as a deposit. It is a क. निक्षेप इव तुला. ५ Such is the world. ६ Carrying in his hands the materials of bathing. स्नानस्य उपकरणानि. ष. त. तानि हस्ते यस्य सः. ७ Being afraid of him through the fear of the theft committed. ८ No body does any good to another through mere devotion, except through fear, avarice or a motive to accomplish some object. कार्यकारण—कार्यस्य कारणं. ष. त. कार्यकारण may also mean cause and effect. ९ In that place where there is great respect shown without any particular motive for accomplishing an object, there a doubt should be entertained as it is beneficial in the end. सुखावहा-सुखं आवहतीति. उप.

अथासौ वणिक्शिशुः स्नानोपकरणमादाय प्रहृष्टमनास्तेनाभ्यागतेन सह प्रस्थितः । तथानुष्ठिते वणिक्स्नात्वा तं शिशुं नदीगुहायां प्रक्षिप्य तद्द्वारं बृहच्छिलयाच्छाद्य सत्वरं गृहमागतः । पृष्टश्च तेन वणिजा भो अभ्यागत तत्कथ्यतां कुत्र मे शिशुर्यस्त्वया सह नदीं गत इति । स आह । नदीतटात्स श्येनेन हृत इति । श्रेष्ठ्याह । मिथ्यावादिन्किं क्वचिच्छ्येनो बालं हर्तुं शक्नोति । तत्समर्पय मे सुतमन्यथा राजकुले निवेदयिष्यामीति । स आह । भोः सत्यवादिन्यथा श्येनो बालं न नयति तथा मूषिका अपि लोहभारघटितां तुलां न भक्षयन्ति । तदर्पय मे तुलां यदि दारकेण प्रयोजनम् । एवं विवदमानौ द्वावपि राजकुलं गतौ । तत्र श्रेष्ठी तारस्वरेण प्रोवाच । भो अब्रह्मण्यमब्रह्मण्यम् । मम शिशुरनेन चौरेणापहृतः । अथ धर्माधिकारिणस्तमूचुः । भोः समर्प्यतां श्रेष्ठिसुतः । स आह । किं करोमि । पश्यतो मे नदीतटाच्छ्येनेनापहृतः शिशुः । तच्छ्रुत्वा ते प्रोचुः । भो न सत्यमभिहितं भवता । किं श्येनः शिशुं हर्तुं समर्थो भवति । स आह । भो भोः श्रूयतां मद्वचः ।

तुलां लोहसहस्रस्य यत्र खादन्ति मूषिकाः ।
राजंस्तत्र हरेच्छ्येनो बालकं नात्र संशयः ॥ ४१४ ॥

ते प्रोचुः । कथमेतत् । ततः श्रेष्ठी सभ्यानामादितः सर्वं वृत्तान्तं निवेदयामास । ततस्तैर्विहस्य द्वावपि तौ परस्परं संबोध्य तुलाशिशुप्रदानेन संतोषितौ ॥

अतोऽहं ब्रवीमि तुलां लोहसहस्रस्येति ।

तन्मूर्ख संजीवकप्रसादमसहमानेन त्वयैतत्कृतम् । अहो साध्विदमुच्यते ।

---

१ Guest. २ In a cave inside the river. ३ If you want your son. ४ From the beginning. ५ By restoring the balance and the son respectively. ६ Not bearing the favour shown (by the lion) to Sanjivaka.

[१]प्रायेणात्र कुलान्वितं कुकुलजाः श्रीवल्लभं दुर्भगा
दातारं कृपणा ऋजूननृजवो वित्तान्वितं निर्धनाः ।
वैरूप्योपहताश्च कान्तवपुषं धर्माश्रयं पापिनो
नानाशास्त्रविचक्षणं च पुरुषं निन्दति मूर्खा जनाः ॥ ४१५ ॥

तथा च । [२]मूर्खाणां पण्डिता द्वेष्या निर्धनानां महाधनाः ।
व्रतिनः पापशीलानामसतीनां कुलस्त्रियः ॥ ४१६ ॥

तन्मूर्ख त्वया हितमप्यहितं कृतम् । उक्तं च ।
[३]पण्डितोपि वरं शत्रुर्न मूर्खो हितकारकः ।
वानरेण हतो राजा विप्राश्चौरेण रक्षिताः ॥ ४१७ ॥

दमनक आह । कथमेतत् । सोब्रवीत् ।

## ॥ कथा २२ ॥

कस्यचिद्राज्ञो नित्यं वानरोति[४]भक्तिपरो[५]ङ्गसेवको[६]न्तःपुरेप्यप्रतिषिद्धप्रसरोतिविश्वासस्थानमभूत् । एकदा राज्ञो निद्रां गतस्य वानरे व्यजनं नीत्वा वायुं[७] विदधति राज्ञो वक्षःस्थलोपरि मक्षिकोपविष्टा । व्यजनेन मुहुर्मुहुर्निषिध्यमानापि पुनःपुनस्तत्रैवोपविशति । ततस्तेन स्व-भावचपलेन मूर्खेण वानरेण क्रुद्धेन सता तीक्ष्णं खड्गमादाय तस्याः उपरि

---

१ Generally in this world, those born in a low family calumniate those who are nobly born, the unfortunate the fortunate, misers a generous man, the crooked the straightforward, the poor the rich, those who are deformed the handsome, sinful the religious, and the foolish censure those who are well-versed in various sciences. श्रीवल्लभ-श्रियः वल्लभं the favourite of the goddess of wealth. २ The wise are an object of hatred to the foolish, the rich to the poor, those who are devoted to religious observances, to the sinful, and virtuous women to the debauched ones. महाधनाः. स. पापशीलाः [illegible] येषां ते. स. ३ An enemy, that is wise, is preferable even to a friend (हितकारक) who is foolish; a king was killed by a monkey, while Brâhmans were saved by a thief. ४ Greatly attached, अतिभक्तिः परं यस्य. स. ५ A personal attendant. ६ Not forbidden access even to the women's apartments. ७ Was fanning him with a fan (taking a fan). ८ Mischievously inclined by nature. ९ On the fly (मक्षिकायाः).

प्रहारो विहितः[१]। ततो मक्षिकोड्डीय गता परं तेन शितधारेणासिना[२] राज्ञो वक्षो द्विधा जातं राजा मृतश्च। तस्माच्चिरायुरिच्छता[३] नृपेण मूर्खोनुचरो न रक्षणीयः॥ अपरमेकस्मिन्नगरे कोपि विप्रो महाविद्वान्परं पूर्वजन्मयोगेन[४] चौरो वर्तते। तस्मिन्पुरेन्यदेशादागतांश्चतुरो विप्रान्बहूनि वस्तूनि विक्रीणीतो[५] दृष्ट्वा चिन्तितवान्। अहो केनोपायेनैषां धनं लभे। इति विचिन्त्य तेषां पुरोनेकानि शास्त्रोक्तानि सुभाषितानि चातिप्रियाणि मधुराणि वचनानि जल्पता तेषां मनसि विश्वासमुत्पाद्य सेवा कर्तुमारब्धा। अथवा साध्विदमुच्यते।

[६]असती भवति सलज्जा क्षारं नीरं च शीतलं भवति।
दम्भो भवति विवेकी प्रियवक्ता भवति धूर्तजनः॥४१८॥

अथ तस्मिन्सेवां कुर्वति तैर्विप्रैः सर्ववस्तूनि विक्रीय बहुमूल्यानि रत्नानि क्रीतानि। ततस्तानि जङ्घा[७]मध्ये तत्समक्षं प्रक्षिप्य स्वदेशं प्रतिगन्तुमुद्यमो विहितः। ततः स धूर्तविप्रस्तान्विप्रान्गन्तुमुद्यतान्प्रेक्ष्य चिन्ताव्याकुलितमना संजातः। अहो धनमेतन्न किंचिन्मम चटितम्[८]। अथैभिः सह यामि। पथि क्वापि विषं दत्त्वैतान्निहत्य सर्वरत्नानि गृह्णामि। इति विचिन्त्य तेषामग्रे सकरुणं विलप्येदमाह। भो मित्राणि यूयं मामेकाकिनं मुक्त्वा गन्तुमुद्यताः। तन्मे मनो भवद्भिः सह स्नेहपाशेन बद्धं भवद्विरहनाम्नैवाकुलं संजातं[९] यथा धृतिं क्वापि न धत्ते[१०]। तद्यूयमनुग्रहं विधाय सहायभूतं मामपि सहैव नयत। तद्वचः श्रुत्वा ते करुणार्द्रचित्तास्तेन सममेव स्वदेशं प्रति प्रस्थिताः। अथाध्वनि तेषां पञ्चानामपि पल्लीपुर[११]मध्ये व्रजतां ध्वाङ्क्षाः[१२] कथयितुमारब्धाः।

---

१ Was made, dealt (दत्तः). २ Having a sharp edge. शिता धारा यस्य. ब. ३ A king desirous of long life. ४ By the force of sin committed in the previous existence. ५ Acc. Plu. of the Pre. P. of क्री 9 P. with वि. ६ An unchaste woman is bashful (affects to be modest), salt water is cool, a hypocrite affects to be considerate, and a roguish person talks sweetly. दम्भ here means a hypocrite person and not hypocrisy. ७ The thigh. ८ Obtained by me. ९ Has become full of dejection at the very mention of separation from you. १० Takes no courage anywhere. ११ The name of a town. १२ Crows.

रे रे । किराता धावत धावत । सपादलक्षधनिनो यान्ति । एतान्निहत्य धनं नयत । ततः किरातैर्ध्वाङ्क्षवचनमाकर्ण्य सत्वरं गत्वा ते विप्रा लगुडप्रहारैर्जर्जरीकृत्य वस्त्राणि मोचयित्वा विलोकिताः परं धनं किंचिन्न लब्धम् । तदा तैः किरातैरभिहितम् । भोः पान्थाः पुरा कदापि ध्वाङ्क्षवचनमनृतं नासीत् । ततो भवतां संनिधौ क्वापि धनं विद्यते तदर्पयत । अन्यथा सर्वेषामपि वधं विधाय चर्म विदार्य प्रत्यङ्गं प्रेक्ष्य धनं नेष्यामः । तदा तेषामीदृशं वचनमाकर्ण्य चौरविप्रेण मनसि चिन्तितम् । यदैषां विप्राणां वधं विधायाङ्गं विलोक्य रत्नानि नेष्यन्ति तदापि मां वधिष्यन्ति ततोहं पूर्वमेवात्मानमरत्नं समर्प्यैतान्मुञ्चामि । उक्तं च ।

मृत्योर्बिभेषि किं बाल न स भीतं विमुञ्चति ।
अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥ ४१९ ॥

तथा च । गवार्थे ब्राह्मणार्थे च प्राणत्यागं करोति यः ।
सूर्यस्य मण्डलं भित्त्वा स याति परमां गतिम् ॥४२०॥

इति निश्चित्याभिहितम् । भोः किराता यद्येवं ततो मां पूर्वं निहत्य विलोकयत । ततस्तैस्तथानुष्ठिते तं धनरहितमवलोक्यापरे चत्वारोपि मुक्ताः ॥

अतोहं ब्रवीमि पण्डितोपि वरं शत्रुरिति ।

अथैवं संवदतोस्तयोः संजीवकः क्षणमेकं पिङ्गलकेन सह युद्धं कृत्वा तस्य खरनखरप्रहाराभिहतो गतासुर्वसुंधरापीठे निपपात । अथ

---

१ Savages, barbarians. २ Persons possessing wealth to the amount of a lac and a quarter. ३ Having defeated. ४ Searched ५ Having searched every limb. ६ Without jewels, or valuables. ७ Having surrendered ( myself ). ८ Child, why do you fear death? He does not spare him who fears him ( death ). Death is sure to overtake mortals either to-day or at the end of a hundred years. अब्दशत. अब्दानां शतं. ष.त. ९ He, who gives up his life for the sake of cows, and Bráhmans, goes to the highest place after having penetrated through the orb of the sun. १० While they ( two ) were thus wrangling or disputing.

°तं गतासुमवलोक्य पिङ्गलकस्तद्गुणस्मरणार्द्रहृदयः[१] प्रोवाच । भो अ-युक्तं मया पापेन[२] कृतं संजीवकं व्यापादयता यतो विश्वासघातादन्य-न्नास्ति पापतरं कर्म । उक्तं च ।

[३]मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः ।
ते नरा नरकं यान्ति यावच्चन्द्रदिवाकरौ ॥ ४२१ ॥

तथा मया सभामध्ये स सदैव प्रशंसितः । तत्किं कथयिष्यामि तेषामग्रतः । उक्तं च ।

[४]उक्तो भवति यः पूर्वं गुणवानिति संसदि ।
न तस्य दोषो वक्तव्यः प्रतिज्ञाभङ्गभीरुणा ॥ ४२२ ॥

एवंविधं प्रलपन्तं दमनकः समेत्य सहर्षमिदमाह । देव कातरे-[५]तमस्तवैष न्यायो यद्द्रोहकारिणं शष्पभुजं हत्वेत्थं शोचसि । तन्नैत-दुपपन्नं भूभुजाम । उक्तं च ।

[६]पिता वा यदि वा भ्राता पुत्रो भार्याथवा सुहृत् ।
प्राणद्रोहं यदा गच्छेत्तं घ्नतो नास्ति पातकम् ॥ ४२३ ॥

तथा च ।

[७]राजा घृणी ब्राह्मणः सर्वभक्षी
स्त्री चावशा दुष्टमतिः सहायः ।
प्रेष्यः प्रतीपोऽधिकृतः प्रमादी
त्याज्या अमी यश्च कृतं न वेत्ति ॥ ४२४ ॥

---

१ With his heart melted with pity by remembering his merits. २ More sinful or wicked. ३ A man, who kills his friend, who is ungrateful, and who breaks faith with others—these men go to hell and remain there so long as there are the moon and sun (that is, perpetually). ४ This verse is equal to 244. ५ This your judgment is the most cowardly. ६ There is no sin in killing either a father, brother, son, wife or friend; when he or she conspires against one's life. ७ These seven, viz., a merciful king, a Brâhmana eating all, that is, voracious, a wife that is not under proper control, a wicked-minded companion, a servant going against one's wishes, a careless officer and one who does not recognize what is done and one who is ungrateful—should be abandoned. प्रतीप lit. against the current of water ( प्रति—इप् from अप् ) and hence going against &c.

अपि च ।

[१]सत्यानृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या ।
भूरिव्यया प्रचुरवित्तसमागमा च
वेश्याङ्गनेव नृपनीतिरनेकरूपा ॥ ४२५ ॥

एवं तेन संबोधितः पिङ्गलकः संजीवकशोकं त्यक्त्वा दमनक साचिव्येन राज्यमकरोत् ॥

॥ समाप्तं चेदं मित्रभेदं नाम प्रथमं तन्त्रम् ॥

---

१ Royal policy is of various forms like a harlot, viz., it is true, false, harsh, sweet-speaking, cruel, compassionate, intent on acquiring wealth, bountiful, extravagant and associating with one having much wealth. All these adjectives apply equally to a *king* and a harlot. २ Sorrow for the death of Sanjivaka. ३ Here ends this first Tantra entitled मित्रभेद.

TWO-THIRDS OF THE EDITION IS ALREADY EXHAUSTED.

# THE STANDARD Sanskrit-English Dictionary

BY

L. R. VAIDYA, M. A., LL. B.

( Sanctioned by the Department of Public Instruction for use in High Schools )

Neat and strongly bound, cheap, handy, well-printed and above all, compendious and reliable, the Dictionary has only to be seen and the temptation to buy it is overpowering. It is a bargain for a life-time for it contains all that you are likely to want in your Sanskrit studies. The author has spared no pains to make the work a standard book of reference for our schools and colleges. Neatness and compactness of arrangement, copious references and original quotations selected by the author himself from classical works usually studied in our schools and colleges, accuracy in giving the various meanings and shades of meanings, the biographical appendix, and the other on metre make the work an altogether indispensable one for the study of the Sanskrit language.

## The Chief Points of Merit of this Dictionary,

AS NOTICED BY THE VARIOUS LEARNED CRITICS WHO HAVE REVIEWED THE WORK.

(1) The book is not a *mere compilation.*

(2) It contains not only the results of the *best and latest efforts of Lexicographers* but a great deal of *original work.*

अपि च ।

[1]सत्यानृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या ।
भूरिव्यया प्रचुरवित्तसमागमा च
वेश्याङ्गनेव नृपनीतिरनेकरूपा ॥ ४२५ ॥

एवं तेन संबोधितः पिङ्गलकः संजीवकशोकं [2]त्यक्त्वा दमनकसाचिव्येन राज्यमकरोत् ॥

॥ समाप्तं चेदं मित्रभेदं नाम[3] प्रथमं तन्त्रम् ॥

---

१ Royal policy is of various forms like a harlot, viz., it is true, false, harsh, sweet-speaking, cruel, compassionate, intent on acquiring wealth, bountiful, extravagant and associating with one having much wealth. All these adjectives apply equally to a *king* and a harlot. २ Sorrow for the death of Sanjivaka. ३ Here ends this first Tantra entitled मित्रभेद.

TWO-THIRDS OF THE EDITION IS ALREADY EXHAUSTED.

# THE STANDARD Sanskrit-English Dictionary

BY

L. R. VAIDYA, M. A., LL. B.

( Sanctioned by the Department of Public Instruction for use in High Schools. )

Neat and strongly bound, cheap, handy, well-printed and above all, compendious and reliable, the Dictionary has only to be seen and the temptation to buy it is overpowering. It is a bargain for a life-time for it contains all that you are likely to want in your Sanskrit studies. The author has spared no pains to make the work a standard book of reference for our schools and colleges. Neatness and compactness of arrangement, copious references and original quotations selected by the author himself from classical works usually studied in our schools and colleges, accuracy in giving the various meanings and shades of meanings, the biographical appendix, and the other on metre make the work an altogether indispensable one for the study of the Sanskrit language.

## The Chief Points of Merit of this Dictionary,

AS NOTICED BY THE VARIOUS LEARNED CRITICS WHO HAVE REVIEWED THE WORK.

(1) The book is not a *mere compilation.*

(2) It contains not only the results of the *best and latest efforts of Lexicographers* but a great deal of *original work.*

(3) Many of the references are the *author's own* being taken directly from the books which are usually read by the most successful students of Sanskrit.

(4) The different *senses of words* are well arranged and given *clearly* and *accurately* and the work is thus a *reliable guide*.

(5) It is eminently qualified for the use of the pupils of Schools and Colleges.

(6) The *biographical appendix* is a novel feature, very *interesting* and very *valuable*.

(7) Comprehensiveness of matter; compactness of size; and modesty of price.

(8) For classical works of the *post-Vedic* literature the *Dictionary* may be *used* with *singular benefit* and *success*.

(9) The work deserves to be the *Standard* Dictionary of the class intended for Schools and Colleges.

The Dictionary contains quotations and references, mythological and other allusions, idiomatic expressions and their uses, choice English equivalents, in short all that a student wants; and it is confidently expected that so far as the study of the Classical Sanskrit works in our Schools and Colleges is concerned, the *Standard Sanskrit-English Dictionary* is a work which the students of Sanskrit cannot afford to dispense with.

Bound in Cloth Price Rs. 3, Postage Ans. 10.

Bound in Half-Leather Price Rs. 4, Postage Ans. 10.

**Apply to**

MR. RAMCHANDRA GOVIND,

MANAGER, MRS. RADHABAI ATMARAM SAGOON,

**Bookseller & Publisher, Kalbadevi Road, BOMBAY.**

*Or to*

MR. HARI NARAYAN GOKHALE,

*MANAGER, ARYA-BHUSHANA PRESS, POONA.*